# सटीककारकचक्रम् ।



श्रीभवानन्दसिद्धान्तवागीशभट्टाचार्य्यप्रणीतम् ।



श्रीमन्माधवतर्कालङ्कारविरचितया टीकया समेतम् ।



श्रीजीवानन्द-विद्यासागरपौत्र-
पण्डित श्रीसुधांशुशेखरभट्टाचार्य्यकृत-टिप्पन्या सहितम् ।
तेनैव संस्कृतं प्रकाशितञ्च ।

प्रथमसंस्करणम् ।

कलिकातामहानगर्य्यां फिनिक्सयन्त्रे मुद्रितम् ।

१९२३





 [illegible]राजतमुद्रा[illegible] ।

# सटीककारकचक्रम् ।

ॐ नमो गणेशाय ।

नत्वा कृष्णपदद्वन्द्वं कारकाद्यर्थनिर्णयः ।
श्रीभवानन्दसिद्धान्तवागीशेन वितन्यते ॥

तत्र क्रियानिमित्तत्वं कारकत्वमिति न सामान्य-लक्षणम् ॥ १ ॥

ओं नमः शिवाय ।

प्रणम्य परमं देवं शिवं विवृतिमादरात् ।
तनोति माधवो धीमान् कारकाद्यर्थनिर्णये ॥

कारकेति ।—कारकाद्यर्थस्य निर्णयो यस्मादिति व्युत्पत्त्या कारकाद्यर्थनिर्णायकग्रन्थ इत्यर्थः, आदिना कर्त्रादिपरिग्रहः । "कः कारकपदार्थः ?" इति शिष्यजिज्ञासानिवृत्तये परमतनिराकरणपूर्व्वकस्वमतसिद्धलक्षणमभिधित्सुः प्रथमतो वैयाकरणमतसिद्धलक्षणमुपन्यस्य दूषयति, तत्र क्रियेति ।—तत्र—कारकादौ, घटकत्वं सप्तम्यर्थः । क्रियेति ।—क्रिया—धात्वर्थः, "क्रिया धात्वर्थ उच्यते" इति शाब्दिकस्मरणात्, तन्निमित्तत्वं – तत्कारणत्वमित्यर्थः । ग्रामं गच्छतीत्यादौ गमधात्वर्थसंयोगावच्छिन्नक्रियायाः कारणत्वाभावेऽपि धात्वर्थतावच्छेदकीभूतसंयोगकारणत्वमादाय ग्रामादेः कारकत्वं, तादृशक्रियायां संयोगकार-

सम्प्रदानादेरनुमतिप्रकाशनद्वारेव तण्डुलादि-सम्पादनद्वारा सम्बन्धिनोऽपि पाकादिक्रियानिमि-त्तत्वेन सम्बन्धिनि चैत्रस्य तण्डुलं पचतीत्यादौ चैत्रादावतिव्याप्तेः ॥ २ ॥

---

णत्वसत्त्वेऽपि क्रियान्यत्वेन निवेशनात् न क्रियायां कारकलक्षणातिव्याप्तिरित्यवधेयम्। केचित्तु, संयोगादिः क्रिया च उभयमेव गम्यादिधात्वर्थः। तथाच, संयोगरूपधात्वर्थकारणत्वमादाय यथाश्रुतमेव सम्यगित्याहुः॥ १ ॥

नन्वत्र क्रियाकारणत्वं साक्षात्परम्परासाधारणप्रयोजकत्वमेव वाच्यम्, अन्यथा सम्प्रदानापादानादावव्याप्तिः; तथाच चैत्रस्य तण्डुलं पचतीत्यादौ सम्बन्धिनि चैत्रादावतिव्याप्तिरित्यत आह, सम्प्रदानादेरिति।—आदिना अपादानादिपरिग्रहः। अनुमतिः,—इच्छा, प्रकाशनं—ज्ञापनं, तद्द्वारा सम्प्रदानादेः क्रियानिमित्तत्वेनेव तण्डुलादिसम्पादनद्वारा सम्बन्धिनोऽपि क्रियानिमित्तत्वेन सम्बन्धिनि चैत्रादावतिव्याप्तिरित्यन्वयः। कुत्र प्रयोगे चैत्रादावतिव्याप्तिरित्याकाङ्क्षायामाह, चैत्रस्य तण्डुलमित्यादि।—तुभ्यं ददानीत्युक्ते ब्राह्मणो यदि ददस्वेति ब्रूयात्, तेन ब्राह्मणस्येच्छामनुमाय दानेऽनिष्टसाधनताज्ञाननिवृत्त्या इष्टसाधनताज्ञानाद्दाननिष्पत्तिरिति. अनुमतिप्रकाशनद्वारा ब्राह्मणस्य दानप्रयोजकत्वं, तण्डुलोत्पत्त्यनुकूलव्यापारादिरूपतण्डुलसम्पादनद्वारा चैत्रादेरपि पाकनिमित्तत्वमस्त्येवेति भावः। एवमपादानस्यापि पतनप्रतिबन्धकसंयोगनाशकविभागद्वारा पतनक्रियानिमित्तत्वं बोध्यम्। अतिव्याप्तेरित्युपलक्षणं,

किन्तु विभक्त्यर्थद्वारा क्रियान्वयित्वं मुख्य-भाक्तसाधारणं कारकत्वं, क्रियानिमित्तत्वसहितं मुख्यमिति । स्तोकं पचतीत्यादौ क्रियाविशेषणेऽतिव्याप्तिवारणाय विभक्त्यर्थद्वारेति ॥ ३ ॥

---

"गड़ि वदनैकदेशे" इति गणोक्ते गण्डति कपोलमित्याद वदनैकदेशस्य धात्वर्थतया तादात्म्यस्याख्यातार्थतया च वदनैक-देशतादात्म्यवान् गण्ड इति शाब्दबोधो जायते, इति वदनैक-देशरूपक्रियाकर्त्तरि गण्डे तादृशक्रियाप्रयोजकत्वासम्भवे-नाव्याप्तिः, एवं गगनं द्रव्यं भवतीत्यादौ द्रव्यतादात्म्यस्यैव भुवः शक्यतया तादृशक्रियाकर्त्तरि गगने तादृशक्रियाया अप्रयो-जकत्वेनाव्याप्तिरपि बोध्या ॥ २ ॥

स्वमतसिद्धलक्षणमाह, विभक्त्यर्थद्वारेति ।—क्रियाविषयतानिरू-पितविभक्त्यर्थविषयतानिरूपितविषयताश्रयत्वमित्यर्थः । भाक्तं—गौणं, ग्रामं गच्छति घटं जानातीत्यादौ मुख्यं ग्रामादि, भाक्तं घटादि, तत्साधारणमित्यर्थः । किं मुख्यमित्याकाङ्क्षायामाह, क्रियेति ।—तथाच, क्रियानिमित्तत्वे सति विभक्त्यर्थद्वारा क्रिया-न्वयित्वं, मुख्यकारकत्वं बोध्यम् ; इदमुपलक्षणं, क्रियाया अनि-मित्तत्वे सति विभक्त्यर्थद्वारा क्रियान्वयित्वं भाक्तकारकत्वम् । उभ-यत्र क्रियानिमित्तत्वं साक्षात्परम्परासाधारणं प्रयोजकत्वरूपं बोध्यम् । ननु क्रियाविषयतानिरूपितविषयतानिरूपितविषयता-श्रयत्वमेव लक्षणमुच्यतां, किं क्रियाविषयतानिरूपितविभक्त्यर्थ-विषयतानिवेशेन ? इत्यत आह, स्तोकमित्यादि ।—यद्यपि पच-

चैत्रस्य पचतीत्यादौ सम्बन्धित्वं न पाकेऽन्वेति,
षष्ठ्या नामार्थसाकाङ्क्षतया क्रियाया अपि कर्म्मादि-

---

तीत्यादितः पाकानुकूलकृत्यादेर्बोधात् पाकविषयतानिरूपितानु-कूलत्वविषयतानिरूपितविषयत्वाश्रयत्वस्य कृत्यादावपि सत्त्वात् तत्रातिव्याप्तिवारकतया विभक्त्यर्थनिवेशप्रयोजनं सम्भवति. तथाऽपि तादृशविषयताश्रयत्वे सति नामार्थत्वनिवेशेनापि तद्वारण-सम्भवात् तत्परित्याग इत्यवधेयम्। न च विशेषणविभक्तेरभे-दार्थकत्वमते विभक्त्यर्थनिवेशेनापि नातिव्याप्तिवारणसम्भव इति वाच्यम्; विशेषणविभक्तेरभेदार्थकत्वमतेऽपि क्रिया-विशेषणोत्तरविभक्तेरभेदार्थकत्वविरहात्; किन्तु साधुत्वमात्र-सम्पादकत्वमेव; अन्यथा क्रियाविशेषणस्य कुत्र वा द्वितीया, कुत्र वा तृतीया इत्यस्य विनिगमकाभावप्रसङ्गात्। इत्यञ्च यत्र विभक्त्यर्थस्य प्रकारविधया भानं, तत्र स्तोकेन पचति अति-शयेन सूत्रयतीत्यादौ तृतीया, यत्र न भानं, तत्रैव स्तोकं पचति अतिशयं सूत्रयतीत्यादौ द्वितीया नानध्यवसायापत्तिरिति। विशेषणविभक्तेरभेदार्थकत्वमतेऽपि अभेदातिरिक्तत्वस्य विभक्त्यर्थे निवेशान्नातिव्याप्तिः। इष्यत एव वा तस्य कारकत्वं मृदुन्या-वित्यादौ यकारानुपपत्तेः, कारकपदात् परस्यैव तस्य विधानात्। पचतीत्यादौ आख्यातार्थकृत्यादावतिव्याप्तिवारणाय विभ-क्त्यर्थोपादानमिति केचिद्वदन्ति, तच्चिन्त्यम्॥ ३॥

ननु चैत्रस्य पचतीत्यादौ तण्डुलादिपदाभावात् अगत्या षष्ठ्यन्तार्थस्य पाकेऽन्वयो वाच्यः, तथाच सम्बन्धिनश्चैत्रस्यापि कारकत्वापत्तेः स्वमते तादवस्थ्यमित्यत आह,—चैत्रस्येति। न

साकाङ्क्षतया परस्पराकाङ्क्षाविरहात्, किन्तु तण्डुल-मित्यादिपदाध्याहारेणैव चैत्रस्य तण्डुलं पचतीत्येवान्वयबोधः। ओदनस्य भोक्ता, मैत्रस्य पाक इत्यादौ षष्ठी कर्म्मत्वकर्त्तृत्वार्थकत्वेन कारकविभक्तिरेव, "कर्त्तृकर्म्मणोः कृति नित्यम्" (क) इत्यनेन तद्विधानात्; अत एव "सम्बन्धस्य कारकत्वं नास्ति क्रियायोगाभावात्" इति शाब्दिकाः ॥ ४ ॥

पाकेऽन्वेति—चैत्रस्य सम्बन्धित्वस्य पाकान्वयासम्भव एवेत्यर्थः। कुत इत्याकाङ्क्षायामाह, षष्ठ्या इति।—नामार्थसाकाङ्क्षतया—नामार्थधर्म्मिकस्वार्थबोधकतयेत्यर्थः। परस्पराकाङ्क्षाविरहात्—परस्परान्वयबोधौपयिकाकाङ्क्षाविरहादित्यर्थः। यद्येवं, तदा तादृशनिरूप्य-निरूपक-भावापन्न-विलक्षणैकविषयता-शालिबोधस्यानुभवसिद्धतया तस्यापलापप्रसङ्गः, प्रसङ्गो वा तत्र तादृशविलक्षणबोधौपयिकाकाङ्क्षादिमत्त्वस्य इत्यत आह,—किन्त्विति। पदाध्याहारेणैवेति।—तथाच अध्याहाराभावे तत्रबोधकत्वमिष्टमेवेति भावः। ननु ओदनस्य भोक्ता, मैत्रस्य पाक इत्यादौ कर्म्मत्वादिरूपविभक्त्यर्थद्वारा भोजनादिरूपक्रियान्वयिन ओदनादेः कारकत्वं स्यादित्यत इष्टापत्तिमाह, ओदनस्येति।—

(क) इत्यनेन—इत्याकारककलापसूत्रेण, कृद्विहितप्रत्यययोगे कर्त्तृकर्म्मणोःषष्ठीविभक्तेर्नित्यविधानादित्यर्थः।

यदि च "गुरुविप्रतपस्विदुर्गतानां प्रतिकुर्व्वीत भिषक् स्वभेषजैः" इत्यादि प्रयोगे विनापि नामाध्याहारं धात्वर्थे षष्ठ्यर्थः सम्बन्धोऽन्वीयते, तदा कर्त्तृत्वकर्मत्वादिषट्कान्यतमद्वारा क्रियान्वयित्वं कारकत्वमिति तत्त्वम् ॥ ५ ॥

---

कर्म्मत्वकर्त्तृत्वादिभेदेनोदाहरणद्वयम् । तस्य कारकविभक्तित्वे प्रमाणमाह—कर्त्तृकर्म्मणोरिति । अत एव—सम्बन्धार्थकषष्ठ्याः कारकविभक्तित्वाभावादेव । सम्बन्धस्य—सम्बन्धबोधकषष्ठ्याः, कारकत्वं—कारकविभक्तित्वं, कारकोत्तरविभक्तित्वमिति यावत् । क्रियायोगाभावात्—षष्ठीविभक्त्यर्थसम्बन्धद्वारा क्रियाविषयतानिरूपितविभक्त्यर्थविषयतानिरूपितविषयताश्रयत्वस्य सम्बन्धार्थकषष्ठीप्रकृत्यर्थे विरहादित्यर्थः ॥ ४ ॥

यदि चेति ।—रोगोपशमो यदि प्रकृते धात्वर्थः, तदाऽध्याहारं विनैव षष्ठ्यर्थाधेयत्वस्य धात्वर्थैकदेशे रोगेऽन्वयादतिव्याप्तिः; यद्युपशम एव धात्वर्थस्तदा रोगमिति पदाध्याहारेणैवान्वयबोध इति क्रियान्वयित्वाभावान्नातिव्याप्तिरित्यतो यदि चेत्युक्तम् । न च क्रिया धात्वर्थः, धात्वर्थत्वञ्च न धातुप्रयोज्यप्रतीतिविषयताश्रयत्वम्, अपि तु धातुपदजन्योपस्थितिमुख्यविशेष्यत्वम्; (ख) तथाच षष्ठ्यर्थाधेयत्वस्य प्रकृते रोगेऽन्वयान्नातिव्याप्तिरिति वाच्यम् ।

---

(ख) तथाच, तादृशधातुपदजन्योपस्थितिमुख्यविशेष्यीभूते रोगोपशमे उपशमे वा षष्ठ्यर्थाधेयत्वस्यान्वयाभावान्नातिव्याप्तिरिति भावः । तादृशमुख्यविशेष्यस्य धात्वर्थत्वे दोषमाह—घटमित्यादि ।

तत्र "क्रियाश्रयत्वं कर्त्तृत्वम्" इति वैयाकरणाः। तेषामयमाशयः,—यद्धातूत्तराख्यातेन यगाद्य-

घटं निरूपयतीत्यादौ तादृशनिरूपणरूपधात्वर्थे ज्ञानानुकूल-व्यापारे विभक्त्यर्थद्वारा घटादेरनन्वयाद्घटादावव्याप्तेः; इदमुप-लक्षणं, "नारदाय रोचते कलहः" इत्यादौ नारदादेरपि कारकत्वापत्तिः, तेषामपि विभक्त्यर्थद्वारा क्रियान्वयित्वादित्यवधेयम्।

कर्त्तृत्वकर्म्मत्वादीति।—आदिना करणत्वादिपरिग्रहः। कर्त्तृत्वाद्यन्यतमद्वारा तत्क्रियान्वयित्वं तत्क्रियाकारकत्वमित्यर्थः॥ ५॥

किं कर्त्तृत्वमित्याकाङ्क्षायां कर्त्तृत्वं निरूपयितुं प्रथमतो वैयाकरणमतमुपन्यस्य दूषयति, तत्रेति।—तत्र—तेषु मध्ये, कर्त्तृत्वाद्यन्यतममध्ये इत्यर्थः, निर्द्धारणे सप्तमीयम्। निर्द्धारणस्थले उद्देश्यभिन्नसामान्यधर्म्मावच्छिन्ने विधेयव्यवच्छेदबोधकतया प्रकृते क्रियाश्रयत्वभिन्नकर्त्तृत्वाद्यन्यतमं कर्त्तृत्वपदप्रतिपाद्यत्वाभाववदित्यन्वयबोधः। गम्यादिधातुस्थले गमनादिक्रियाश्रयत्वस्य कर्त्तरि सत्त्वेऽपि देवदत्तस्त्यजतीत्यादिप्रयोगकाले त्यागकर्त्तरि देवदत्ते गमनकर्त्तृत्वापत्तिरित्यत आह, तेषामिति।—वैयाकरणानामित्यर्थः। यद्धातूत्तराख्यातेनेति।—यद्धातूत्तरत्वघटिताख्यातत्वावान्तरधर्मप्रकारकनिश्चयेनेत्यर्थः; तथाच, यगादिघटितधर्मभिन्नयद्धातूत्तरत्वघटिताख्यातत्वावान्तरयत्किञ्चिद्धर्म्मप्रकारकनिश्चयत्वव्यापकजनकतानिरूपित-जन्यतावच्छेदक-तद्धात्वर्थविषयतानिरूपितशाब्दधी(ग)विषयताविशिष्टधर्मवत्त्वं तद्धातुकर्त्तृत्वं

(ग) विषयतावैशिष्ट्यं स्वरूपसम्बन्धेन बोध्यं, तादृशधर्म्मश्च कर्त्तृत्वादिकं, तादृशविषयत्वाश्रयधर्म्मवत्त्वमित्यर्थः। अत्रेदं बोध्यं,—कर्त्तृविहिताख्यातान्तधात्वर्थमादायैव कर्म्म-

समभिव्याहृतेन यद्धात्वर्थान्वितयादृशधर्म्मवत्त्वं

पर्य्यवसितम्; नातो गच्छतीत्यादिवाक्यजन्यशाब्दाभावदशायां त्यागकर्त्तरि गमनकर्त्तृत्वप्रसङ्गः। यद्धातूत्तरत्वघटितत्वानुपादाने आख्यातत्वावान्तरधर्मतिप्त्वादिप्रकारकनिश्चयत्वस्य गम्याद्युत्तरत्वेनाननुसन्धीयमानतिप्त्वादिप्रकारकनिश्चयसाधारणतया तत्र गम्यादिधात्वर्थविषयता-निरूपित-कृतिविषयताशालि-शाब्दबोध-जनकताया असत्त्वेन तादृशनिश्चयत्वव्यापकत्वाभावादसम्भवः स्यादतस्तादृशोक्तिः। स्वरूपसम्बन्धरूपयद्धातूत्तरत्वघटिताख्यातत्वावान्तरयत्किञ्चिद्धर्मप्रकारक-निश्चयत्वावच्छिन्नजनकतानिवेशेऽप्यसम्भवः, भ्रमसाधारण्यानुरोधेन गमधातूत्तरतिप्त्वादिप्रकारकनिश्चयत्वेन हेतुत्वासम्भवात्; किन्तु गत्वावच्छिन्नविषयता-निरूपित-अत्वावच्छिन्नविषयतानिरूपितेत्यादिक्रमेणैव; अतस्तादृशनिश्चयत्वव्यापकत्वनिवेशः। तादृशनिश्चयनिष्ठजनकता-निवेशे गम्यते गच्छति इत्यादिवाक्यद्वयविषयक-समूहालम्बन-तादृशनिश्चयनिष्ठां गम्यते इत्याद्यानुपूर्व्वीप्रकारकनिश्चयत्वावच्छिन्नजनकतामादाय ग्रामादावपि गम्यादिकर्त्तृत्वापत्तिरतस्तत्-परित्यागः। यद्धातूत्तरत्वघटितयत्किञ्चिद्धर्म्मप्रकारकनिश्चयत्वेनेत्युक्तौ गमनीय इत्याद्यानुपूर्व्वीज्ञानमादाय ग्रामे गमनकर्त्तृत्वापत्तिः, अतो यत्किञ्चिद्धर्म्मे आख्यातत्वावान्तरत्वनिवेशः। अन्यत् सुधीभिरूह्यम्। अथ देवदत्तेन गम्यते इत्यादिप्रयोगकाले देवदत्तस्य गमधात्वर्थकर्त्तृत्वानुपपत्तिः; तथाहि, गमधात्वर्थ-

---

विहितभावविहिताख्यातस्थले देवदत्तेन पच्यते गम्यते इत्यादौ निरुक्तकर्त्तृत्वलक्षणसमन्वयः कार्य्यः।

बोध्यते, तादृशधर्म्मवत्त्वमेव तत्क्रियाकर्त्तृत्वम्। एवञ्च पचतीत्यादौ पाकानुकूलव्यापारवत्त्वं, जानातीत्यादावाश्रयत्वं, नश्यतीत्यादौ प्रतियोगित्वं तत्तत्क्रियानिरूपितं तत्तत्क्रियाकर्त्तृत्वम्॥ ६॥

प्रकारतानिरूपितकृतिविशेष्यतया यगाद्यसमभिव्याहृताख्यातज्ञानजन्यतावच्छेदकतया गमधात्वर्थविशेष्यतानिरूपितकृतिप्रकारतायास्तज्जन्यतानवच्छेदकत्वेन (घ) तादृशाख्यातज्ञानजन्यतावच्छेदक-गमधात्वर्थविषयता-निरूपित-विषयता-विशिष्टधर्म्मवत्त्वाभावादिति चेन्न, वैयाकरणमते देवदत्तो गच्छतीत्यादौ देवदत्तकर्त्तृक-गमनमित्याकारकक्रियामुख्यविशेष्यकबोधस्यैवोत्पत्तेः; अत एव "क्रियाप्रधानमाख्यातम्" इति शाब्दिकाः स्मरन्ति। यद्धात्वर्थविषयतानिरूपितयन्निष्ठविषयत्वं तादृशाख्यातज्ञानजन्यतावच्छेदकं तद्धात्वर्थविषयतानिरूपितशाब्दबोधविषयताश्रयतद्धर्मवत्त्वमिति यथाश्रुतविवक्षया नानुपपत्तिरित्यपि केचित्। यगादीत्यादिना इचादिपरिग्रहः। तादृशधर्म्मवत्त्वं—तद्धात्वर्थविषयतानिरूपित-शाब्दबोधीय-विषयताश्रयतद्धर्म्मवत्त्वमित्यर्थः। समानाकारप्रत्यक्षदशायां कर्त्तृत्ववारणाय विषयतायां शाब्दबोधीयत्वनिवेशः। तत्र क्रियाकर्त्तृत्वं विशिष्य दर्शयति—एवञ्चेति। केचित्तु यथाश्रुततत्तत्क्रियाश्रयत्वस्य कर्त्तृत्वरूपत्वे जानाती-

(घ) तथाच देवदत्तेन गम्यते ग्राम इत्यादौ देवदत्तनिष्ठकृतिजन्यगमनाश्रयो ग्राम इति शाब्दबोधोदयेन तत्र गमधात्वर्थांशे कृतेर्विशेषणत्वेन प्रकारतयैव तज्ज्ञानात् न कर्त्तृविहिताख्यातज्ञानजन्यतावच्छेदकत्वतादृशकृतिविशेष्यताया एव तज्जन्यतावच्छेदकत्वादिति भावः।

यगाद्यसमभिव्याहृतेनेति विशेषणात् पच्यते तण्डुल इत्यादौ पाकजन्यफलाश्रयत्वेन तण्डुलादेर्बोधान्न तस्य कर्त्तृत्वम् । काष्ठैः स्थाल्यामोदनं पचतीत्यादौ करणाधिकरणकर्म्मणां क्रियान्वितकरणत्वादिधर्म्मवत्त्वेऽपि स धर्म्मो नाख्यातप्रतिपाद्यः । यदा तु तत्तत्तात्पर्य्येणाख्यातं प्रयुज्यते,

---

त्यादाविव लक्षणसमन्वयः, चैत्रस्तण्डुलं पचति घटो नश्यतीत्यादौ कर्त्तरि चैत्रघटादौ पाकनाशाश्रयत्वाभावादव्याप्तिरेव, तदाश्रये तण्डुलकपालादावतिव्याप्तिरिति भङ्ग्या प्रतिपादितमिति वदन्ति, तन्न; क्रियाभेदेन कर्त्तृलक्षणस्य भिन्नतया पाकादिक्रियास्थले अनुकूलव्यापारवत्त्वसम्बन्धेन, नाशादिस्थले प्रतियोगित्वसम्बन्धेन विवक्षणादव्याप्त्यतिव्याप्त्योरनवकाशादिति ॥ ६ ॥

यगाद्यसमभिव्याहृतेनेत्यस्य व्यावृत्तिमाह—पच्यते तण्डुल इत्यादि । फलाश्रयत्वेनेति ।—फलं विक्लित्तिरूपं, स च (ङ) विलक्षणावयवसंयोगः । आख्यातान्तपदव्यावृत्तिमाह— काष्ठैः स्थाल्यामिति । इदमुपलक्षणम्; अस्मदुक्तरीत्यापि व्यावृत्तिर्बोध्या । स धर्म्मो नाख्यातप्रतिपाद्यः, किन्तु तृतीयासप्तम्यादिरूपस्यादिप्रतिपाद्य एवेत्यर्थः । तत्तत्तात्पर्य्येण—पाकान्वित-

---

(ङ) वैलक्षण्यञ्च शैथिल्यरूपं, तथाच शिथिलाख्यावयवसंयोग एवात्र विक्लित्तिः । अत्र च पचधातूत्तराख्यातपदेन पाकजन्यफलाश्रयत्वरूपधर्म्मवत्त्वस्य तण्डुलादौ बोधात् कर्त्तृत्वापत्तिर्बोध्या ।

तदा काष्ठं पचतीत्यादौ तेषां कर्त्तृत्वमिष्टमेव। तथा पच्यते ओदनः स्वयमेवेत्यादिकर्म्मकर्त्तरि ओदनादेः कर्मणोऽपि कर्त्तृत्वं, तत्र हि स्ववृत्ति-व्यापारजन्यपाकजन्यफलशाल्योदन इति बोधः, तत्र ओदनपदोत्तरप्रथमाया व्यापारः; यद्वा—लक्षणाया व्यापारसामान्य शक्तस्याख्यातस्यैवार्थः, व्युत्-पत्तिवैचित्र्याच्चात्र यगादिसमभिव्याहृताख्यातार्थ-

करणत्वादिबोधतात्पर्य्येणेत्यर्थः। तदा—प्रयोगकाले, तेषां—करणाधिकरणकर्मणां, कर्त्तृत्वमिष्टमेवेति; अत एव "विवक्षा-वशात् कारकाणि भवन्ति" इति शाब्दिका वर्णयन्ति। तत्र विवक्षावशात्—प्रयोगवशादित्यर्थः। कर्म्मकर्त्तरीति, प्रत्यय-स्थले इति शेषः। स्ववृत्तीति।—स्वम्—ओदनः, तद्वृत्ति-व्यापारः,—तण्डुलावयवाग्निसंयोगः, एतस्यौदनवृत्तित्वञ्च (च) स्वाश्रयारभ्यत्वसम्बन्धेन, पाकः,—विक्लित्त्यनुकूलव्यापारः, स च तण्डुलावयवक्रिया; विक्लित्तिश्च शिथिलाख्यतण्डुलावयवसंयोगः। व्यापारार्थकप्रथमायाः प्रायशः प्रयोगाभावादाधुनिकलक्षणापत्ते-राह—यद्वेति। आख्यातस्यैवार्थ इति, व्यापार इति पूर्वेणा-न्वयः। नन्वाख्यातार्थव्यापारादेः प्रथमान्तार्थविशेषणतया धात्वर्थविशेष्यतया चान्वयनियमात् तादृशान्वयबोध एवाप्रामा-णिक इत्यत आह, व्युत्पत्तिवैचित्र्यादिति।—आकाङ्क्षावैचि-

(च) अत्र स्वं तादृशाग्निसंयोगः, तदाश्रयो यस्तण्डुलावयवस्तदारभ्यत्वस्य ओदने सत्त्वात्।

व्यापारे प्रथमान्तार्थस्य विशेषणतयाऽन्वयः, तत्र कर्त्राख्यातस्य व्यापारवाचित्वादोदनान्विततादृश-व्यापारस्य यगाद्यसमभिव्याहृताख्याताप्रतिपाद्य-त्वादोदनः स्वं पचतीत्यादिप्रयोगस्यासाधुतयाऽभावेऽपि तादृशव्यापारे तज्जन्यप्रतिपत्तिविषयत्वयोग्य-ताया अनपायादिति ॥ ७ ॥

---

त्वादित्यर्थः. तथाच, तादृशाकाङ्क्षा तादृशबोध एव कारण-मिति भावः। कर्त्राख्यातस्य—कर्तृविहिताख्यातस्य, तिबादे-रिति यावत्। नन्वसाधुत्वनिश्चयात् तादृशप्रयोगाभावेन तज्जन्य-शाब्दबोधाभावात् जन्यत्वाव्यवहितोत्तरत्वोभयसम्बन्धेन यगाद्य-समभिव्याहृत--तादृशाख्यात-ज्ञानविशिष्टज्ञानीयविषयतावत्त्वस्य तादृशव्यापारेऽसत्त्वान्नाव्याप्त्युद्धार इत्यत आह—ओदनः स्वं पचतीत्यादि। स्वरूपयोग्यताया इति, तथाच साधुत्वनिश्चय-दशायाम् ओदनः स्वं पचतीति कदाचित् प्रयोगसम्भवात् स्ववृत्ति-व्यापारजन्यपाकजन्यफलशाल्योदन इति बोधस्यानुभवसिद्धतया पाकविषयतानिरूपितव्यापारविषयताया अगत्या यगाद्यसम-भिव्याहृततिबादिप्रकारकनिश्चयजन्यतावच्छेदकतायां आवश्यक-त्वेन विवक्षिततादृशज्ञानजन्यतावच्छेदकविषयतावत्त्वं, पच्यते ओदनः स्वयमेवेति प्रयोगकाले तादृशप्रयोगाभावेऽपि तादृश-व्यापारेऽबाधितमेव, तादृशज्ञानविशिष्टज्ञानविषयत्वनिवेशे प्रयो-जनाभाव इति भावः ॥ ७ ॥

पाचयतीत्यादौ पाकानुकूलव्यापारो णिजन्तस्यार्थः, तदनुकूलव्यापार आख्यातस्य, तदाश्रयः कर्त्तेति। "स्वतन्त्रः कर्त्ता" इति पाणिनिसूत्रमपि एतत्परतयैव व्याख्येयमिति, तन्न, अचेतनेऽभियुक्तानां स्वरसतः कर्त्तृपदाप्रयोगात् (क)। कारकान्तराप्रयोज्यत्वे सति कारकान्तरप्रयोजकत्वं कर्त्तृत्वं, सत्यन्ताच्च छेद्यसंयोगादिरूप-

---

इनन्तधातुस्थले लक्षणं सङ्गमयति, पाचयतीत्यादि।—पाकः पचेरर्थः, इनर्थस्य व्यापारः, तदन्वितव्यापार आख्यातार्थः; एवञ्च चैत्रो मैत्रेण पाचयतीत्यादौ पाकानुकूलमैत्रनिष्ठव्यापारस्तदीयचेष्टा तत्कृतिर्वा, तदनुकूलो यो व्यापारः त्वं पच इत्यादि शब्दप्रयोगरूपस्तद्वान् चैत्र इत्याकारकस्तत्र शाब्दबोधः। ननु "स्वतन्त्रः कर्त्ता" इति पाणिनिसूत्रविरोध इत्यत आह—स्वतन्त्र इति। स्वरसतः,—लक्षणां विनेत्यर्थः, अनुपपत्तिज्ञानं विनेति केचित्, फलतो न विशेषः, लक्षणया तु तादृशप्रयोगो भवत्येवेति भावः। मतान्तरमाह, कारकान्तरेति।—स्वभिन्नकारकेत्यर्थः, स्वं—लक्ष्यत्वेनाभिमतं, सत्यन्तस्य निष्कृष्टार्थं स्वयमेव व्यक्तीकरिष्यति, विशेष्यदलार्थस्तु स्वभिन्नकारकजन्यतत्कार्य्यानुकूलव्यापारजनकत्वमिति। सत्यन्तव्यावृत्तिमाह—छेद्येति। जनका-

---

(क) एतत्परतयैव—यद्वातूत्तरेत्यादिनिरुक्तलक्षणार्थपरतयैव। निरुक्तलक्षणं दूषयति,—इति तन्नेत्यादिना। कर्त्तृपदाप्रयोगादिति।—तथाच निरुक्तलक्षणमचेतने कर्त्तरि अतिव्याप्तमिति भावः।

व्यापारजनके कुठारादौ नातिव्याप्तिरित्यपरे। तदसत्, ईश्वरप्रयोज्यानां संसारिणां तत्तत् क्रियाकर्त्तृत्वानुपपत्तेः। तदप्रयोज्यत्वञ्च यदि फलानुकूलतज्जन्यव्यापारानाश्रयत्वं,तदा दण्डादि-

न्तेन विशेष्यदल-सत्त्वमाविष्कृतम्। नातिव्याप्तिरिति।—तथाच कुठारभिन्नं यत् कारकं, तत्प्रयोज्यत्वात् कुठारादौ नातिव्याप्ति-रिति भावः। यद्यपि कुठारस्य न कर्त्तृप्रयोज्यत्वं, तथाऽपि तन्निष्ठ-व्यापारे कर्त्तृप्रयोज्यत्वस्य सत्त्वात् तादृशव्यापारविशिष्टकुठारादा-वपि तत्प्रयोज्यत्वं यथाश्रुतेऽप्युपपादनीयमिति। यथाश्रुतसत्य-न्तार्थे दोषमाह, ईश्वरेति।—तथाच कर्त्तृभिन्नो यः कारक ईश्वरः, संसारिणां—देहिनां, तत्प्रयोज्यतयाऽव्याप्तिः, अत्र देहांशे प्रयोज्यतामादाय देहिनां प्रयोज्यत्वं बोध्यम्, ईश्वरस्य जन्यमात्रं प्रत्येव जनकत्वादिति भावः। निष्कृष्टार्थमाह— यदीति। फलानुकूलेति।—तत्क्रियानुकूलस्वभिन्नकारकजन्य-व्यापारानाश्रितत्वमित्यर्थः। यद्यपि कर्त्तृनिष्ठव्यापारे पूर्वोक्तेश्वर-जन्यतामादाय दोषदानं सम्भवतीति तत्परित्यागो न विचारसहः, तथाऽपि स्वभिन्नकारकजन्यतायां जन्यत्वानवच्छिन्नत्वविशेषणात् ईश्वरजन्यत्ववारणसम्भवात् (ज) दण्डादिजन्येत्युक्तम्; अत्र

(ज) तथाच ईश्वरस्य जन्यत्वावच्छिन्नं प्रति कारणतया सुतरामीश्वरजन्यत्वस्य जन्यत्वानवच्छिन्नत्वाभावात् तद्वारणं बोध्यम्।

जन्यसंयोगादिरूपव्यापाराश्रयत्वात् कुलालादाव-व्याप्तिः, अन्यच्च दुर्वचम् ॥ ८ ॥

तत्राहुः,—अनुकूलकृतिमत्त्वं कर्त्तृत्वं, पाकानु-

स्वभिन्नकारकजन्यतत्कार्य्योत्पत्त्यनुकूलव्यापारानाश्रितत्वे सति स्वभिन्नकारकजन्यतत्क्रियानुकूलव्यापारजनकत्वं कर्त्तृत्वमिति फलितं, तत्र क्रियायामतिव्याप्तिवारणाय व्यापारे जन्यान्त-विशेषणं, कर्त्तृव्यापारे स्वात्मककारकजन्यतयाऽव्याप्तिवार-णाय स्वभिन्नेति कारकविशेषणं, स्वभिन्नजन्येत्युक्तौ कर्त्तृव्यापारे कर्त्तृभिन्नादृष्टजन्यतया तद्दोषतादवस्थ्यमतः कारकेति, इति रीत्या तन्मते प्रतिपदव्यावृत्तिर्बोध्या। कर्म्मत्वाद्यन्यतमशून्यत्वं सत्यन्तेन विवक्षणीयं, विवक्षणीयञ्च कारकत्वं विशेष्यदलेन, तथाच तत्क्रियाकर्म्मत्वाद्यन्यतमशून्यत्वे सति तत्क्रियाकारकत्वं तत्कर्त्तृत्वं वाच्यमित्यत आह, अन्यच्चेति।—लघुरूपमन्यद्दुर्वच-मित्यर्थः, लघुरूपञ्च मयैव वक्तव्यमिति भावः ॥ ८ ॥

स्वाभिप्रेतलक्षणमाह, अनुकूलकृतीति।—तत्क्रियानुकूल कृतिमत्त्वं—तत्क्रियाकर्त्तृत्वं, तत्क्रियाकर्त्तृशब्दप्रतिपाद्यमित्यर्थः, तत्तत्क्रियानिष्ठविषयतानिरूपितानुकूलत्वविषयतानिरूपितविष-यताविशिष्टकृतिमत्त्वमिति तु पर्य्यवसितार्थः, नातः प्रयोग-शून्यतादशायां कर्त्तृत्वव्यवहारप्रसङ्गः। यदि च प्रयोगशून्यता-दशायामपि कर्त्तृत्वव्यवहारो ग्रन्थकृतामिष्टः, तदा यथाश्रुतमेव सम्यगिति ध्येयम्। कृतिमत्त्वं समवायसम्बन्धेन बोध्यम्; यदि च शरीरादावपि कर्त्तृत्वव्यवहारो मुख्यः, तदा समवायाव-च्छेदकताऽन्यतरसम्बन्धेन तद्वत्त्वं बोध्यम्, ईश्वरपरिगृहीतशरीरे

कूलव्यापारवत्त्वप्रतिसन्धानेऽपि काष्ठादौ तान्त्रिकानां स्वरसतः कर्त्तृपदाप्रयोगात्, कृताकृतविभागादिना कृधातोर्यत्नार्थकत्वे निश्चिते आश्रयार्थकतृजन्तकृधातुव्युत्पन्नकर्त्तृशब्दस्य यत्नाश्रयबोधकत्वाच्च। अचेतने कर्त्तृपदप्रयोगो गौणः। यदि चान्यविषयककृतिजन्ये नान्तरीयके मत्तो भूतं, न तु मया कृतमिति व्यपदेशान्न मुख्यकर्त्तृत्वं, तदा तद्विषयकत्वेनापि कृतिर्विशेषणीया, न चैवं तद्विषयक-

---

कर्त्तृत्वव्यवहारो भाक्त एवेति ध्येयम्। व्याप्यवृत्तेरवच्छेदकत्वं स्वीकृत्य तत्रापि मुख्यकर्त्तृत्वव्यवहार इति केचित्। स्वोक्तौ प्रमाणमाह—पाकानुकूलेत्यादिना प्रतिसन्धानेऽपीत्यन्तेन व्यवहर्त्तव्यज्ञानं सम्पादितम्। तान्त्रिकानां—विवेचकानां, स्वरसतः,—लक्षणां विना। स्वोक्तौ योगार्थत्वमप्युपपादयति, कृताकृतेति।—ओदनपाकसाधककृतिजन्ये कलायपाके मत्तो भूतं, न तु मया कृतमिति व्यपदेशात् ओदनपाकः कृतः, न तु कलायपाक इति विभागादिनेत्यर्थः, आदिना पचतीत्यादौ पाकं करोतीत्यादिवृद्धविवरणादिपरिग्रहः। नन्वेवमचेतने कर्त्तृपदप्रयोगो लक्षणां विना न स्यादित्यत्र इष्टापत्तिमाह,—अचेतने इति। गौणः,—लाक्षणिकः। ननु नान्तरीयककलायपाकस्थले कलायं पचतीति प्रयोगः स्यात् तदनुकूलकृतिमत्त्वात्, न स्याच्च न पचतीत्यादि प्रयोगः तदनुकूलकृत्यभावस्याभावादित्यत आह, यदि चेति।—वस्तुतस्तद्द्वयमपीष्टमेवेत्यतो यदि चेत्युक्तम्। तद्विषयकत्वेना

कृतिमत्त्वमेव (झ) तत्कर्त्तृत्वमस्तु, गुरुतरभारोत्तोलनादौ तद्विषयककृतिमत्त्वेऽपि उत्तोलनक्रियाद्यनिष्पत्तौ कर्त्तृपदाप्रयोगात् (ञ)। विषयत्वं साध्यत्वेन बोध्यं, तेन भोजनकृतेरुद्देश्यत्वेन सुखादिविषयकत्वेऽपि तत्कर्त्तुर्न सुखकर्त्तृत्वम् । अस्मदादिकर्त्तृकपाकादावपि ईश्वरस्य कर्त्तृत्वमिष्टमेव ;

---

पीति ।—तथा च स्वनिष्ठविषयतानिरूपकत्वस्वजनकत्वोभयसम्बन्धेन तत्तत्क्रियाविशिष्टकृतिमत्त्वं कर्त्तृत्वमिति फलितम् । विषयत्वमिति ।—साध्यत्वेन अभेदे तृतीया, साध्यत्वाभिन्नं विषयत्वमित्यर्थः । तेन—साध्यत्वाख्यविषयतानिवेशेनेत्यर्थः । उद्देश्यत्वेनेति ।—अत्रापि अभेदे तृतीया । न सुखकर्त्तृत्वं—तथाच भोजनं करोतीतिवत् सुखं करोतीति प्रयोगस्य शक्त्या नापत्तिरिति, लक्षणया तु तादृशप्रयोगो भवत्येवेति भावः । नन्वेवमस्मदादिकर्त्तृकपाकादितात्पर्य्येणापि ईश्वरः पचतीति प्रयोगः स्यादत आह, अस्मदादीति ।—ईश्वरपरिगृहीतशरीरावच्छेदेन ईश्वरकर्त्तृकपाकतात्पर्य्ये ईश्वरः पचतीति प्रयोगः सर्वैरेवेष्टः, इत्यतोऽस्मदादि-

---

(झ) एवकारात् तदनुकूलत्वव्यवच्छेदः ।

(ञ) कर्त्तृपदाप्रयोगादिति ।—तथाच तत्र गुरुतरभारोत्तोलनानुकूलकृतिमत्त्वाभावान्न कर्त्तृपदप्रयोग इति भावः ।

न चैवमीश्वरः पचतीति प्रयोगः स्यात्, तथाविवक्षायामिष्टत्वात्। कार्य्यत्वानवच्छिन्नजन्यतानिरूपितमसाधारणमनुकूलत्वमेव वा लक्षणघटकमित्याहुः॥ ९॥

कर्म्मत्वन्तु न करणव्यापार्य्यत्वं,(ट) तद्धि करणजन्यक्रियानुकूलव्यापाराश्रयत्वं, तच्च दात्रेण धान्यं लुनातीत्यादौ हस्तादिकरणव्यापार्य्ये दात्रेऽति-

---

कर्त्तृकपाकादावपीति, पाकादावपि—पाकतात्पर्य्येणापि। न चैवमिति।—एवं—तादृशपाकादावीश्वरकर्त्तृत्वस्येष्टत्वे। तथाविवक्षायां—स्वनिष्ठ-साध्यत्वाख्यविषयता निरूपकत्व-स्वजनकत्वोभय-सम्बन्धेन वस्तुगत्या पाकविशिष्टेश्वरकृतिप्रकारकबोधतात्पर्य्ये इत्यर्थः। कल्पान्तरमाह, कार्य्यत्वेति।—तादृशजन्यतानिरूपितानुकूलत्वरूपमसाधारणमनुकूलत्वमेवेत्यर्थः। लक्षणघटकं—कर्त्तृलक्षणघटकमित्यर्थः। आहुरित्यनेनास्वरसः सूचितः, स च विश्वस्य कर्त्ता भुवनस्य गोप्तेत्यादि बहुविधवेदविरोधरूपः॥ ९॥

"किं कर्म्मत्वम्?" इति जिज्ञासायां परमतनिराकरणपूर्वकं स्वमतं व्यवस्थापयितुं प्राचीनमतीयलक्षणमुपन्यस्य दूषयति, करणेति।—क्रियानुकूलव्यापाराश्रये करणे कर्त्तरि चातिव्याप्तिवारणाय जन्यान्तं व्यापारविशेषणं, तथाच दात्रादिकरणजन्यसंयोगादिरूपव्यापाराश्रयकाष्ठादौ लक्षणसमन्वयः। हस्ता

---

(ट) ...

व्याप्तम्। नापि परसमवेतक्रियाजन्यफलशालित्वं, गमिपत्योः पूर्वस्मिन् देशे, त्यजेरुत्तरस्मिन् देशे, स्पन्देः पूर्व्वापरयोश्च कर्मत्वप्रसङ्गात्; एवं तीरे नदी वर्द्धते इत्यादौ वृद्धेरवयवोपचयस्य परम्परया तीरप्राप्तिफलकत्वात् तज्जन्यफलाश्रये तीरेऽति-व्याप्तेः॥ १०॥

---

दीति।—छिदानुकूलहस्तादिकरणजन्यहस्तसंयोगादिरूपव्यापाराश्रये दात्रे इत्यर्थः। परसमवेतेति।—स्वभिन्नसमवेतेत्यर्थः, स्वं—कर्म्मत्वेनाभिमतं, नातः कर्त्तर्य्यतिव्याप्तिरिति, क्रिया—धात्वर्थः, फलमत्र धर्म्मः। गमिपत्योरिति।—संयोगावच्छिन्नक्रियाया गमधात्वर्थतया तज्जन्यविभागरूपफलवत्त्वात् पूर्वदेशेऽतिव्याप्तिः। अधःसंयोगावच्छिन्नक्रियायाः पतधात्वर्थतया च पूर्वदेशेऽतिव्याप्तिर्बोध्या। पतधातोरकर्म्मकत्वे च परदेशेऽप्यतिव्याप्तिर्बोध्या। त्यजेरिति।—विभागावच्छिन्नव्यापारस्य त्यजधात्वर्थतया तज्जन्यसंयोगरूपफलवत्त्वमादाय उत्तरदेशेऽतिव्याप्तिरिति भावः। स्पन्देरिति।—क्रियायाः स्पन्दधात्वर्थतया तज्जन्यविभागरूपफलवत्त्वमादाय पूर्वदेशे, तादृशसंयोगरूपफलवत्त्वमादाय उत्तरदेशे चातिव्याप्तिरिति भावः। वृद्धेः,—वृधधात्वर्थस्य, अवयवोपचयस्य—बहुतरावयवस्येत्यर्थः, परम्परया—स्वसमवायिसंयोगसम्बन्धेन, तीरप्राप्तिः,—नदीतीरसंयोगः, तज्जन्यफलाश्रये—अवयवोपचयजन्यसंयोगरूपफलाश्रये इत्यर्थः, अतिशयशक्तिप्रदर्शनाय बहुतरस्थलेऽतिव्याप्तिप्रदर्शनमिति॥ १०॥

अत्राहुः,—त्यजिगमिप्रभृतीनां स्पन्दनमात्रं नार्थः,न हि त्यजति-गच्छतीत्यनयोः प्रतीत्योरविशेषं कश्चिदभ्युपैति। एवञ्च त्यजेर्विभागेन, गमेरुत्तर-देशसंयोगेन, पतेरधःसंयोगेनावच्छिन्नाः स्पन्दा वाच्याः, (ठ) तथाच तत्तद्धात्वर्थतावच्छेदकफल-शालित्वं तत्तद्धात्वर्थकर्मत्वं, स्पन्दि-तुधधात्वोः

धात्वर्थतावच्छेदकफलघटितकर्म्मत्वलक्षणस्याग्रे वाच्यतया गम्यादिधातूनां धात्वर्थतावच्छेदकफलस्याप्रसिद्धिशङ्कानिबन्धन-कर्म्मत्वलक्षणस्याव्याप्तिशङ्कां परिजिहीर्षुर्गम्यादिधात्वर्थताव-च्छेदकं फलं दर्शयितुमाह,—त्यजिगमिप्रभृतीनामिति। स्पन्दन-मात्रमिति।—मात्रपदेन तदवच्छेदकफलव्यवच्छेदः। इत्यनयो-रिति—वाक्यजन्यबोधयोरित्यर्थः। अविशेषमिति—अविशेषोप-गमे त्यागो न गमनमित्यादिप्रयोगाप्रसङ्गः, प्रसङ्गश्च त्यागो गमनमित्यादिप्रयोगस्येति भावः। एवञ्च—निरुक्तानुपपत्त्या वैलक्षण्यस्यावश्यकत्वे इत्यर्थः। त्यजेर्विभागेनेत्यादि तृतीयान्त-त्रयस्यावच्छिन्ना इत्यनेन सम्बन्धः। अवच्छिन्नाः,—जनकतासम्ब-न्धेन तादृशतादृशधात्वर्थतावच्छेदकविशिष्टाः क्रिया वाच्या इत्यर्थः। एतावता संयोगादीनां गम्यादिधात्वर्थतावच्छेदकत्व-मुपपाद्य तद्घटितकर्म्मत्वलक्षणमाह, तथाचेति।—संयोगादीनां गम्यादिधात्वर्थतावच्छेदकत्वे चेत्यर्थः। तत्तद्धात्वर्थकर्म्मत्व-मिति।—तथाच त्यजधात्वर्थतावच्छेदकविभागवत्त्वेऽपि तस्य(ड)

(ठ) स्पन्दाः,—क्रियाः, वाच्याः,—शक्याः।

(ड) तस्य—विभागस्य।

फलावच्छिन्नव्यापाराबोधकत्वात् न पूर्वापरदेशयोस्तीरस्य च कर्मत्वं, फलावच्छिन्नव्यापारबोधकत्वादेव धातूनां सकर्मकत्वव्यवहारो मुख्यः, सविषयकपदार्थाभिधायि-जानात्यादीनान्तु विषयित्वरूपविभक्त्यर्थद्वारा नामार्थान्वयित्वमेव गौणं सकर्म-

गमधात्वर्थतानवच्छेदकतया पूर्वदेशस्य न गमनकर्म्मत्वमिति भावः। स्पन्दिवृधोः सकर्म्मकत्वं निरस्यति, स्पन्दिवृधधात्वोरिति।—फलावच्छिन्नव्यापाराशक्तत्वादित्यर्थः। नन्वेवं घटं जानातीत्यादौ घटादेः कर्म्मता न स्यात्, ज्ञाधातुप्रभृतीनां फलावच्छिन्नव्यापाराबोधकत्वादित्यत आह,—सविषयकेति। जानात्यादीति।—आदिना द्वेष्टीच्छति-करोत्यादीनां संग्रहः। विषयित्वरूपविभक्त्यर्थद्वारेति।—केवलविभक्त्यर्थद्वारेत्युक्तौ आश्रयत्वरूपविभक्त्यर्थद्वारा नामार्थान्वयिबोधकत्वात् भूप्रभृतीनामपि सकर्म्मकत्वापत्तिरतो विषयित्वेति, उद्देश्यत्वाख्यविषयताभिन्नविषयतेत्यर्थः, तेन न वक्ष्यमाणात एवेत्यादिग्रन्थासङ्गतिः, न वा कटं करोतीत्यादौ वीरणं करोतीत्यादिप्रयोगः। (ढ) तथाच नामार्थविषयतानिरूपिततादृशविषयत्वविषयतानिरूपितस्वनिष्ठविषयताशालिबोधकत्वमेव गौणं सकर्म्मकत्वं पर्य्यव-

(ढ) उद्देश्यत्वाख्यविषयताभिन्नविषयतापदेन साध्यत्वाख्यविषयतैव विवक्षणीया, तेन वीरणस्य कटोपादानत्वेन वीरणे उपादानत्वाख्यविषयतासत्त्वेन उद्देश्यत्वाख्यविषयताभिन्नविषयतासत्त्वेऽपि कटं करोतीत्यादिप्रयोगकाले वीरणं करोतीत्यादिप्रयोगस्य नापत्तिः, वीरणस्य सिद्धत्वेन साध्यत्वाख्यविषयतायाः कटे एव सत्त्वादिति तात्पर्य्यम्।

कत्वं, घटं जानातीत्यादौ द्वितीयातो विषयत्वोप-

सितम्। केचित्तु अत एवेत्यादिग्रन्थसङ्गमनाय नामार्थविषयता-निरूपितविषयत्वविषयतायां विषयत्वावच्छिन्नत्वं निवेशयन्ति, तन्न, वह्निमनुमिनोतीत्यादौ विधेयतात्वरूपेणैव द्वितीयार्थ-बोधकताया व्युत्पत्तिसिद्धतया तत्र माधातोः सकर्म्मकत्वानुप-पत्तेः। अथ वह्निमत्त्वेन पर्वतमनुमिनोतीत्यादौ तृतीयान्त-समभिव्याहृतानुमित्यर्थकधातुयोगि द्वितीयाया उद्देश्यत्वबोधक-तयाऽपि व्युत्पत्तिसिद्धतया माधातोर्भवन्मतेऽपि सकर्मकत्वानुप-पत्तिरिति चेन्न, वह्निमनुमिनोतीत्यादिस्थलीयबोधमादाय तस्य सकर्म्मकत्वव्यवहारोपपत्तेः कृतिनिरूपितविलक्षणोद्देश्यत्वाख्य-विषयताभेदस्य प्रकृते निवेशाच्चेति (ण)। ज्ञाने घटो भासते इत्यत्र विभक्त्यर्थस्य संसर्गतया भानमते सप्तम्यर्थनिरूपितत्वसम्बन्धेन ज्ञानविशिष्टा या भासधात्वर्थविषयता, निरूपितत्वसम्बन्धेन तद्विशिष्टा या आख्यातार्थाश्रयता, तदाश्रयो घट इत्याकारक-बोधोत्पत्त्या धात्वर्थविषयताद्वारा नामार्थज्ञानान्वय्याश्रयत्व-बोधकतया आख्यातवारणाय (त) विभक्त्यर्थेति। घटं जाना-तीत्यादौ विभक्त्यर्थविषयताद्वारा ज्ञाधात्वर्थान्वयिघटादिबोधक-

(ण) तथाच वह्निमत्त्वेन पर्वतमनुमिनोमीत्यादौ पर्वतेऽनुमितीयोद्देश्यत्वं, न तु कृति-निरूपितोद्देश्यत्वमिति न माधातोः सकर्म्मकत्वानुपपत्तिरिति भावः।

(त) आख्यातवारणाय—आख्यातपदस्य सकर्म्मकत्ववारणाय, धातोरिव सकर्म्मक-त्वात्। एवमग्रेऽपि बोध्यम्।

स्थितौ घटविषयकज्ञानाश्रयतावानित्यन्वयबोधात्, अत एव यतधातोरकर्मकत्वं, तदुपस्थापिते यत्ने नामार्थस्योद्देश्यत्वेनैवान्वयबोधात्, अभुञ्जानेऽपि भोजनाय यतते इति प्रयोगात्, अत एव तादृश-धातुप्रयोगे कर्मप्रत्ययाभावात् भोजनं यतते इति न प्रयोगः॥ ११॥

---

घटपदवारणाय नामार्थेति। गौणं—लाक्षणिकम्। द्वितीयात इति लक्षणयेति शेषः। आश्रयतेति।—तत्राख्यातस्य लाक्षणिक-त्वादिति भावः। अत एवेति—यत एव उद्देश्यत्वान्यविषयताद्वारा नामार्थान्वयिधातोरेव सकर्म्मकत्वमत एवेत्यर्थः। अकर्म्मकत्व-मिति।—अत्र केचित् मातुः स्मरतीत्यादौ "अधीगर्थदयेशां कर्म्मणि" इत्यादिसूत्रानुशिष्टद्वितीयाबाधकषष्ठीवत् द्वितीया-बाधिकैव चतुर्थीति यतधातोः सकर्मकत्वमेवेत्यपि वदन्ति। उद्देश्यत्वेनैवेति।—एवकारेण उद्देश्यताभिन्नविषयताव्यवच्छेदः। ननु भोजनाय यतते इत्यादौ चतुर्थ्यर्थः साध्यत्वादिरूपविषयत्व-मेवेति कथं यतधातोरकर्मकत्वम्? अत आह,—अभुञ्जाने इति। इति प्रयोगात्—इत्येव प्रयोगादित्यर्थः, तथाच भोजनसाध्य-ताकक्कतिकाले तथाप्रयोगो न भवत्येव, किन्तु भोजनं करोती-त्येव तत्र प्रयोग इति न साध्यत्वाख्यविषयता चतुर्थ्यर्थः, न वा सकर्म्मत्वमिति। अत एवेति—यतधात्वर्थे साध्यत्वाख्यविष-यताद्वारा नामार्थानन्वयादेव, कर्म्मप्रत्ययाभावात्—कर्मता-बोधकद्वितीयाद्यभावादित्यर्थः॥ ११॥

अत्र भूमिं प्रयाति तरुं त्यजति खग इत्यादौ धात्वर्थतावच्छेदक-संयोगविभाग-रूपफलवत्त्वेऽपि स्वस्य, स्वं स्वात्मानं प्रयाति त्यजतीत्यादेरप्रयोगात् धात्वर्थे परसमवेतत्वमपि विशेषणं देयम्। न चैव-मुभयकर्मजसंयोगस्थले मल्लो मल्लं गच्छतीति-प्रयोगवत् मल्ल आत्मानं गच्छतीति प्रयोगः स्यात्,

---

इत्यादावित्यनन्तरं खगादेरिति पूरणीयं, स्वं—खगः, अप्रयोगादिति—इत्यादि प्रयोगाभावेन तत्र कर्मत्वाभावादित्यर्थः, तथाच तरुं त्यजति खग इत्यादौ खगे कर्मतालक्षणस्याति-व्याप्तिरित्यभिप्रायः। परसमवेतत्वमिति।—स्वभिन्नसमवेतो यो धात्वर्थः, तन्निष्ठं यद्धात्वर्थत्वं तदवच्छेदकीभूतधर्मवत्त्वं तत्क्रिया-कर्मत्वमित्यर्थः। न च तत्र खगभिन्नं यत् खगान्तरं मनुष्यादिकं वा, तद्वृत्तिक्रियानिष्ठगमधात्वर्थतावच्छेदकसंयोगवत्त्वस्य खगे सत्त्वात् कुतोऽतिव्याप्तिवारणमिति वाच्यम्, स्वभिन्नसमवेतं यद्गमनादिकं, तज्जन्यो गमधात्वर्थतावच्छेदको यो धर्म-स्तद्वत्त्वं(थ) तत्क्रियाकर्मत्वमित्यस्य विवक्षितत्वात्, जन्यत्वञ्च उभयावृत्तिधर्मावच्छिन्ननिरूपितं बोध्यं, (द) तेन संयोगत्वेन

---

(थ) तादृशधर्म्मश्च संयोगविभागादिरूपः।

(द) उभयावृत्तित्वञ्च स्ववृत्तित्व-स्वान्यवृत्तित्वोभयसम्बन्धेन पदार्थविशिष्टान्यत्वरूपं, तथा च तत्तद्गमनादिक एव उभयावृत्तिधर्म्मः तदवच्छिन्नजनकतानिरूपितजन्यत्वस्य तत्तत्-संयोगादावेव सत्त्वान्न क्षतिः, तत्तत्संयोगत्वाद्यवच्छिन्नं प्रति तत्तद्गमनत्वेनैव विशेषकार्य्य-कारणभावात्।

भूमिं प्रयातीत्यादितो हि द्वितीयादिना परत्वं प्रकृत्यर्थापेक्षकं बोध्यते, तथाच भूमिभिन्नसमवेत-भूमिवृत्तिसंयोगजनकस्पन्दानुकूलकृतिमानित्यन्वय-बोधः। मल्ल आत्मानं गच्छतीत्यादौ स्वभिन्न-समवेतम् आत्मवृत्तिसंयोगजनकं मल्लान्तरवृत्ति यद्गमनं तदनुकूलकृतिमत्त्वस्य स्वस्मिन्नभावादेव नातिप्रसङ्ग इति॥ १२ ॥

अत्र प्रकृत्यर्थस्यान्वयितावच्छेदकावच्छिन्नप्रति-योगिताकत्वसम्बन्धेन न परत्वेऽन्वयः, पृथिवीं प्रयाति विहग इत्यादौ विहगस्य पृथिवीत्वाव-च्छिन्न-प्रतियोगिताक-भिन्नत्वाभावादनन्वयापत्तेः,

---

क्रियात्वेन सामान्यतः कार्य्यकारणभावमादाय अन्यनिष्ठसंयोगस्य अन्यनिष्ठक्रियाजन्यत्वेऽपि न क्षतिरिति मन्तव्यम्। एवं—पर-स्परमल्लस्य तादृशक्रियाकर्मत्वेऽपीत्यर्थः, प्रयोगः स्यादिति, तथाच परस्परमल्लस्य कर्मतालक्षणलक्ष्यत्वेऽपि तादृशप्रयोगोऽनुभवविरुद्ध इति भावः। भूमिं प्रयाति खग इत्यादौ द्वितीयायाः परत्वार्थ-कतामुपगम्य तादृशबोधः। तादृशबोधं प्रदर्शयन् प्रकृतेऽतिप्रसङ्गं वारयति—भूमिं प्रयातीत्यादि नातिप्रसङ्ग इत्यन्तेन ॥ १२ ॥

परत्वे—भेदे। भिन्नत्वाभावादिति।—विहगस्यापि पृथिवी-

प्रतियोगितामात्रेणान्वये तु आत्मनोऽपि स्वप्रतियोगिकद्वित्वाद्यवच्छिन्नप्रतियोगिताकभिन्नत्वात्तथैव दोषः, अतो द्वितीयाद्यर्थफले यद्व्यक्तेरन्वयस्तद्व्यक्तित्वावच्छिन्नप्रतियोगितासम्बन्धेन प्रकृत्यर्थस्य कर्म्माख्यातार्थफलान्वयिनश्च परत्वेऽन्वयः, पृथिवीं प्रयातीत्यादौ यत्पृथिवीव्यक्तिवृत्तिसंयोगजनकत्वं प्रयाणस्य शाब्दधीविषयस्तद्व्यक्तिभिन्नत्वं विहगे वर्त्तते एवेति न कोऽपि दोषः ॥ १३ ॥

---

त्वादिति भावः। तथैव दोषः,—स्वमात्मानं प्रयातीत्यापत्तिरेव दोषः। प्रकृत्यर्थस्य—द्वितीयाप्रकृत्यर्थस्य, परत्वेऽन्वय इत्यनेनान्वयः। विहगेन गम्यते भूमिरित्यादौ द्वितीयाप्रकृतेरभावात् कर्माख्यातार्थे परत्वे कस्यान्वयः? इत्यत आह, कर्माख्यातार्थफलान्वयिनश्चेति।—तथाच स्वबोधकबोध्यफलान्वयिन एव स्वस्मिन्नन्वय इत्युभयसाधारण एको नियम इति भावः (ध) ॥१३॥

---

(ध) स्वबोधकबोध्यफलान्वयिन इति—स्वं—परत्वं, तथाहि भूमिं प्रयातीत्यादौ द्वितीयाविभक्तेः परसमवेतक्रियाजन्यफलशालित्वार्थकतया परत्वबोधिका या द्वितीयाविभक्तिस्तद्बोध्यं यत् संयोगादिरूपं फ तदन्वयिनः,—तद्विशिष्टस्य भूमिपदार्थस्य स्वस्मिन् परत्वेऽन्वयः, एवं गम्यते भूमिरित्यादौ कर्म्माख्यातप्रत्ययस्य परसमवेतत्वादितादृशकर्म्मत्वे फलार्थकत्वेन परत्वबोधक-आख्यातप्रत्ययस्तद्बोध्यसंयोगादिरूपफलान्वयिनः भूमिपदार्थस्य स्वस्मिन् परत्वेऽन्वयः इति [illegible]

केचित्तु पृथिवीं प्रयातीत्यादौ तु भूखण्डस्यैव पृथिवीपदार्थत्वं, न तु वृक्षविहगसाधारणपृथिवीत्वजात्यवच्छिन्नस्य, तथाचान्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वव्युत्पत्तावपि न क्षतिः, एवमन्यत्रापि कर्म्मवाचकसामान्यपदे लक्षणया विशेषपरत्वमित्याहुः। यत्तु तत्क्रियानधिकरणत्वे सति तत्क्रियावच्छेदकफलशालित्वं कर्म्मत्वं, द्वितीयादे-

---

ननु पृथिवीं प्रयातीत्यादौ तद्वृत्तित्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन पृथिवीत्वावच्छिन्नस्य भेदेऽन्वयो न भवति तद्धर्मावच्छिन्नप्रतियोगिताकत्वस्यैव तद्धर्मावच्छिन्नस्य सम्बन्धत्वादितिवादिनां मते आह, केचित्तु पृथिवीमिति।—पृथिवीपदार्थत्वमिति लक्षणयेति शेषः। अनन्तलक्षणापत्तिरूपास्वरस एतन्मते आहुरित्यनेन सूचितः। तत्क्रियानधिकरणत्वे सति—तद्धात्वर्थानधिकरणत्वे सति, तद्धात्वर्थतावच्छेदकफलशालित्वं तद्धात्वर्थकर्मत्वमित्यर्थः। तरुं त्यजति खग इत्यादौ खगे कर्मतालक्षणस्यातिव्याप्तिवारणाय सत्यन्तम् (न)। ननु खगादौ कर्म्मतालक्षणस्यातिव्याप्तिवारणेऽपि खगः स्वं गच्छतीत्यादिप्रयोगवारणासम्भव इत्यत आह, द्वितीयादेरिति (प)।—आदिना

---

(न) तथा च त्यजधात्वर्थतावच्छेदकविभागरूपफलशालित्वेऽपि विभागावच्छिन्नक्रियारूपत्यजधात्वर्थाधिकरणत्वान्न कर्त्तरि खगेऽतिव्याप्तिरिति भावः।

(प) वस्तुत एतादृशाशङ्कया द्वितीयादेरिति ग्रन्थावतारो न सङ्गच्छते, सत्यन्तघटितनिरुक्तकर्म्मतालक्षणस्य तत्रातिप्रसङ्गः न शङ्कास्पदमेव, कर्त्तृभूतखगपदार्थस्य कर्म्मभूत-

रपि तत्क्रियानधिकरणत्वमर्थ इति तन्न, क्रियाव्यक्तिभेदेनानन्तशक्तिकल्पनापत्तेः ॥१४॥

---

कर्म्माख्यातसंग्रहः, तथाच ग्रामं गच्छतीत्यादौ गमनानधिकरणग्रामवृत्ति-संयोगानुकूल-क्रियानुकूल-कृतिमानित्याकारक-बोधः। ग्रामो गम्यते इत्यादौ गमनानधिकरणग्रामो गमनजन्यसंयोगवान् इत्याकारकबोधः। क्रियाव्यक्तिभेदेनेति—समभिव्याहृत-क्रियाव्यक्तिभेदेनेत्यर्थः। अनन्तशक्तिकल्पनापत्तेरिति।—द्वितीयादेरित्यादिः यद्यपि सर्वादिपदवत् समभिव्याहृतधात्वर्थतावच्छेदकत्वोपलक्षित-धर्म्मावच्छिन्नानधिकरणत्वेऽनुगतशक्ति-कल्पना प्रकृतेऽपि सम्भवतीति नानन्तशक्तिकल्पना, तथापि अभावप्रतियोगितावच्छेदककोटावुपलक्षणविधया भानानभ्युपगमे सा न सम्भवतीति ध्येयम्। अत्र च मते,—मल्लो मल्लं गच्छतीत्यादौ मल्ले गमनक्रियानधिकरणत्वाभावादत्र कर्म्मतालक्षणस्याव्याप्तिस्तादृशप्रयोगानुपपत्तिश्च, यत्किञ्चिद्गमनक्रियानधिकरणत्युक्तौ खगः स्वं गच्छतीतिप्रयोगापत्तिः, तत्र खगे यत्किञ्चिद्गमनानधिकरणत्वात्, गमधात्वर्थस्थलेऽपि अनन्तशक्तिश्चेत्यादि दूषणमपि द्रष्टव्यम् ॥ १४ ॥

---

स्वपदार्थाभिन्नतया कर्त्तृवत् कर्म्मणोऽपि तत्क्रियानधिकरणत्वासम्भवात्, अतो रौद्रीटीकाकृता "सत्यन्तार्थः केन बोधनीय इत्यत आह द्वितीयादेरिति" इति यदागर्भं उक्तः स एव सुष्ठुतया प्रतिभाति।

वस्तुतस्तु ( फ ) अन्योन्याभावप्रतियोगितावच्छेदकत्वं क्रियान्वयि द्वितीयादेरर्थः, तथा च द्वितीयाद्यर्थफले पदार्थैकदेशेऽन्योन्याभावे च एकव्यक्तेरेव प्रकृत्यर्थस्य कर्म्माख्यातार्थफलान्वयिन-

अन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वव्युत्पत्तेः सर्वमतसिद्धतया स्वमते तद्विरोध ( ब ) इत्यत आह,—वस्तुतस्त्विति। प्रतियोगितावच्छेदकत्वं कुत्रान्वयि ? इत्याकाङ्क्षायामाह, क्रियान्वयीति।—कारकविभक्त्यर्थस्यासति बाधके क्रियायामन्वयबोधस्य व्युत्पत्तिसिद्धत्वात् तादृशव्युत्पत्त्याऽन्वयेनैव च नातिप्रसङ्ग इति भावः (भ)। नन्वन्योन्याभावप्रतियोगितावच्छेदकत्वस्य द्वितीयार्थत्वेऽपि ग्रामं गच्छति नर इति तात्पर्य्येणापि नरो नरं गच्छतीत्यपि प्रयोगः स्यात्, नरनिष्ठसंयोगानुकूलनरान्तरनिष्ठभेदप्रतियोगितावच्छेदकं यद्गमनं तदनुकूलकृतिमत्त्वस्य सत्त्वादत आह, तथा चेति।—पदार्थैकदेशेऽन्योन्याभावप्रतियोगितावच्छेदकत्वरूपपदार्थैकदेशेऽन्योन्याभावे इत्यर्थः। एकव्यक्तेरेवेति—

(फ) प्रकृतमनुसरति वस्तुतस्त्वित्यादि।

(ब) तद्विरोधः,—तादृशव्युत्पत्तिविरोधः, तथाहि तादृशव्युत्पत्तिस्वीकारे पृथिवीं प्रयाति विहग इत्यादावव्याप्तिः, तदनङ्गीकारे च स्वमात्मानं प्रयातीत्यादिप्रयोगापत्तिः स्यादिति प्रागुक्तमेव।

(भ) अन्वयेनैव च—अन्योन्याभावप्रतियोगितावच्छेदकत्वस्य क्रियायामन्वयेनैव च। नातिप्रसङ्गः,—स्वमात्मानं प्रयातीत्यादौ न प्रागुक्तातिव्याप्तिः, तथाहि क्रियाभिन्ने तदन्वयोपगमे प्रकृत्यर्थनिष्ठद्वित्वादावपि तदन्वयसम्भवेन द्वित्वावच्छिन्नप्रतियोगिताकप्रकृत्यर्थभेदमादाय प्रागुक्तातिप्रसङ्गः स्यात्।

स्याधिकरणत्वेनान्वयः, एवञ्च भूमिं प्रयातीत्यादौ भूमिवृत्तिसंयोगजनकभूमिवृत्त्यन्योन्याभावप्रतियोगितावच्छेदकप्रयाणानुकूलकृतिमानित्यन्वयबोधः । देवदत्तेन ग्रामो गम्यते इत्यादौ ग्रामवृत्त्यन्योन्याभावप्रतियोगितावच्छेदकदेवदत्तनिष्ठकृतिजन्यगमनजन्यफलाश्रयो ग्राम इत्यन्वयबोधः । आत्मवृत्तिक्रियायाः स्ववृत्त्यन्योन्याभावप्रतियोगितानवच्छेदकत्वादात्मानं प्रयातीत्यादेर्न प्रसङ्गः ॥ १५ ॥

एवं ददातेर्मूल्यग्रहणं विना स्वस्वत्वध्वंस-

---

व्युत्पत्तिवैचित्र्यादिति भावः । प्रयाणेत्यादि ।—संयोगावच्छिन्नक्रियानुकूलकृतिमानित्यर्थः, संयोगस्य द्वितीयार्थतया धात्वर्थघटकतया च द्विधा भानादिति भावः । सम्भेदेनान्यतरवैयर्थ्यमिति न्यायेन एकधैव भानमिति केचित्, तन्मते प्रयाणं क्रियामात्रमिति ॥ १५ ॥

इत्थञ्च निर्व्यूढकर्म्मत्वलक्षणे शिष्यमनुगृह्य धात्वर्थं व्याकृत्य कर्मतालक्षणं ग्राहयति,—एवमित्यादिना । ददातेरिति ।—तादृशत्याग-(म)-रूपदानं दानपदार्थः, स एव ददातेर्धातोरर्थ इत्यन्वयः, एवमग्रेऽपि । विक्रयवारणाय मूल्येति । पशूद्देश्यकयागकरणस्थले

---

(म) तादृशत्यागश्च इदं मम न भवतु, परस्य भवत्वित्याकारिकेच्छारूपः ।

पूर्वकपरस्वत्वोत्पत्त्यवच्छिन्नत्यागः । यजतेर्दैवतोद्देश्यकस्वत्वध्वंसफलकत्यागः, जुहोतेश्च तादृशत्याग-

---

चैत्रः पशुमात्मने ददातीति प्रयोगवारणाय स्वस्वत्वध्वंसेति । परस्वत्वोत्पत्तीति पाठे तु—(य) धनद्वारा पशूद्देश्यकयागकरणप्रवर्त्तकस्य परकीयपशुस्वत्वानुकूलेच्छामादाय धनदाता चैत्राय पशुं ददातीति प्रयोगवारणाय (र) स्वस्वत्वध्वंसेति । उपेक्षावारणाय परस्वत्वोत्पत्तीति । दैवतोद्देश्यकेति ।—दैवतेति स्वरूपकथनं, अन्यथा विष्णुं यजते इत्यादौ विष्णुपदार्थानन्वयप्रसङ्गादिति । दैवतोद्देश्यकस्वत्वध्वंसजनकत्यागरूपधात्वर्थैकदेशस्य दैवस्य कर्म्मणि विष्णावभेदान्वय इति केचिद्वदन्ति, तदत्यन्तमसत्; धात्वर्थस्य धात्वर्थघटकस्य वाऽभेदेन भेदेन वा कारकपदार्थविशेषणतयाऽन्वयस्य कुत्रचिदप्यक्लृप्तत्वात्, दैवतात्वावच्छिन्नविषयतानिरूपितोद्देश्यतात्वावच्छिन्नविषयतादिनिरूपितयागत्वावच्छिन्नविषयताकबोधविषयकसङ्केतग्रहेण विष्णुत्वावच्छिन्नविषयतानिरूपितोद्देश्यतात्वावच्छिन्न-विषयतादि-निरूपित-यागत्वावच्छिन्नविषयताकशाब्दबोधस्य कथञ्चिदप्यजननाच्च । यदि दैवत्व-

---

(य) स्वस्वत्वध्वंसपूर्वकेति विशेषणं परित्यज्य परस्वत्वोत्पत्त्यवच्छिन्नत्यागमात्रविवक्षणे त्वित्यर्थः ।

(र) प्रयोगवारणायेति ।—तथाहि यत्र चैत्रः पशुफलकयागायान्यस्माद् धनं प्रतिगृह्य तादृशयागं कृत्वा पशुं लभते, तत्र स्थले धनदाता चैत्राय पशुं ददातीति प्रयोगो न सम्भवति, पशौ धनदातुः स्वत्वाभावेन तद्दानासम्भवात् । स्वस्वत्वेत्यादि विशेषणपरित्यागे तु तत्र स्थले पशुफलकयागाय चैत्रं प्रवर्त्तयितुर्धनिनश्चैत्रीयपशुस्वत्वानुकूलेच्छारूपत्यागसम्भवेन तादृशप्रयोगापत्तिः स्यात्, तद्विशेषणदाने च पशौ धनिनः स्वत्वाभावेन स्वस्वत्वध्वंसचैत्रस्वत्वजनकत्यागासम्भवान्न तदापत्तिः ।

फलाग्निप्रक्षेपोऽर्थः, अत एव ऋत्विजां तादृश-त्यागाभावेऽपि होतृत्वम्। अग्निप्रक्षेपश्चाग्निवृत्ति-संयोगानुकूल-घृतादिवृत्ति-क्रियानुकूलनोदनादि-व्यापारः। न चैवम् अग्नौ जुहुयादित्यत्राग्निवृत्ति-संयोगानुकूलक्रियेत्यादिशाब्दबोधेन पुनरुक्तिनिव-

---

व्याप्यत्वोपलक्षित-धर्मावच्छिन्नविषयता-निरूपितेत्यादित्यागान्त-विषयताशालिबोधविषयकसङ्केत उपेयते, तदा देवपदार्थविष-यकबोधसङ्केतविषयकतया तस्यान्वयानुसन्धानं वायसदर्शनानु-सन्धानसमानं विष्णवाद्युद्देश्यकतादृशत्यागविषयकबोधस्य तादृश-सङ्केतविषयतया यजादिधातोर्डीङादिधातुवदकर्मकतापत्तिश्चेति। न चैवं पितरं यजेतेत्यपि स्यात्, न चेष्ट एव तादृशप्रयोगः अनुभवविरोधात्; अत एव जगदीशेन त्यागे मन्त्रकरणकत्वं विशेषणं दत्तमिति वाच्यम्; यजधातुना तादृशार्थबोधने देवादि-पदसमभिव्याहारस्य तन्त्रत्वात्, वस्तुतस्तु देवता च उद्देश्यताक-स्वत्वध्वंसजनकत्यागश्चोभयमेव यजधात्वर्थः, तत्र देवरूपार्थस्य व्युत्पत्तिवैचित्र्यात् विष्ण्वादावभेदान्वयः, विष्ण्वादेश्च द्वितीय-पदार्थैकदेशे(ल) उद्देश्यत्वेऽन्वय इति। तादृशत्यागजन्यार्थकफला-न्तस्य (व) परिचायकतामात्रं न पुनर्धात्वर्थघटकत्वम्; तथा

---

(ल) उद्देश्यताकस्वत्वध्वंसजनकत्यागरूपो यो यजधातोर्द्वितीयोऽर्थस्तदेकदेशे उद्देश्यत्वे इत्यर्थः।

(व) मूले तादृशत्यागफलाग्निप्रक्षेपरूप "हु" धात्वर्थघटकस्य तादृशत्यागफलान्तस्येत्यर्थः।

न्धनोऽनन्वयः, धात्वर्थतावच्छेदकसंयोगात्मकफल-शालित्वेनाग्नेरपि कर्मत्वापत्तिश्च (श)। अत्र संयोगावच्छिन्नक्रियानुकूलव्यापारस्यैव धात्वर्थतया आद्यदोषस्याभावात्, तत्र क्रियाया एव धात्वर्थतावच्छेदकतया संयोगस्य धात्वर्थतावच्छेदकताव-

---

चाग्निप्रक्षेप एव हुधात्वर्थः, होतृत्वं न यष्टृत्वं, देवतोद्देश्यकस्वत्वध्वंसजनकपरित्यागाभावात् (ष) अत एव ऋत्विग् यजतीति न प्रयोगः, घृतादीति स्वरूपकथनं, (स) नोदनं विलक्षणसंयोगः, आदिना हस्तक्रियापरिग्रहः। अनन्वय इति। उद्देश्यतावच्छेदकविधेययोरैक्यात् (ह) शाब्दबोधानभ्युपगमादिति

---

मूलस्थताद्दशत्यागपदेन देवतोद्देश्यकस्वत्वध्वंसफलकत्यागो बोध्यः, तस्य फलमिति विग्रहेण तज्जन्यो योऽग्निप्रक्षेप इति तदर्थः।

(श) उत्तरयति—अत्र संयोगेत्यादि। आद्यदोषस्याभावादिति।—तथाच धात्वर्थघटकतयाऽग्निवृत्तित्वस्याप्रवेशेन प्रागुक्तपौनरुक्त्यसम्भव इति भावः।

(ष) यजनद्रव्ये होतुः स्वत्वाभावेन यजनद्रव्यपरित्यागजन्यस्वत्वध्वंसस्यासम्भव इति तज्जनकपरित्यागासम्भवादिति भावः।

(स) स्वरूपकथनमिति।—घृतादेः कर्मतयैवोपादानस्यावश्यकत्वेन धात्वर्थे तत्प्रवेशे पौनरुक्त्यापत्तेरिति घृतादिवृत्तिपदं स्वरूपकीर्त्तनमात्रमिति भावः। तथा चाग्निवृत्तिसंयोगानुकूलक्रियानुकूलनोदनादिव्यापार एवाग्निप्रक्षेपपदार्थः।

(ह) तादृशधात्वर्थघटकेऽग्निवृत्तिसंयोगे अनन्यगतिकतया व्युत्पत्तिवैचित्र्येणाग्नावितिसप्तम्यन्तार्थस्याग्निवृत्तित्वस्यान्वयावश्यकत्वेनोद्देश्यतावच्छेदकविधेययोरैक्यादिति भावः।

च्छेदकतया तदन्वयिनोऽग्ने: कर्म्मत्वासम्भवेन द्वितीयदोषस्याभावात्, द्वितीयार्थो वृत्तित्वं, तच्च धात्वर्थतावच्छेदकफलेऽन्वेति ॥ १६ ॥

विप्राय गां ददाति, विष्णुं यजते, घृतं जुहोतीत्यादौ विप्रोद्देश्यकगोवृत्तिस्वस्वत्वध्वंसपूर्वकपरस्वत्वोत्पत्तिफलकत्यागानुकूलकृतिमान्, विष्णूद्देश्यकविष्णुवृत्तिस्वत्वध्वंसपूर्वकस्वत्वफलकत्यागानुकूलकृतिमान्, देवतोद्देश्यकस्वत्वध्वंसफलकत्यागजन्यघृतवृत्त्यग्निसंयोगावच्छिन्नक्रियानुकूलनोदनादिव्यापारानुकूलकृतिमानिति क्रमेणान्वयबोधः अत्र देवतायाः स्वत्वस्वीकारे तत्र वृत्तित्वान्वयेनैव विष्णोः कर्म्मत्वम्, इतरथा उद्देश्यतासम्बन्धेन स्वत्व-

---

भावः । धात्वर्थतयेति लक्षणयेत्यादि, सप्तम्यन्तार्थस्य परम्परयाऽग्निवृत्तित्वस्य नोदनादावन्वयस्वीकारे लक्षणां विनाप्युपपत्तिरिति ध्येयम् । द्वितीयदोषस्याभावादिति ।—कर्म्मतालक्षणशरीरे साक्षात् धात्वर्थतावच्छेदकत्वस्य निविष्टत्वादिति भावः ॥ १६ ॥

विप्रोद्देश्यकेति ।—उद्देश्यत्वं चतुर्थ्यर्थः, तस्य निरूपकत्वसम्बन्धेन त्यागेऽन्वयः । गोवृत्तित्वस्य परस्वत्वेऽन्वयः । त्यागानुकूलकृतिमानिति ।—इदन्त्विच्छायाः कृतिजन्यत्वमते, अन्यथा त्यागा

ध्वंसरूपधात्वर्थतावच्छेदकफलवत्त्वात् कर्मत्वम्, अत एव मन्त्रकरणकहविस्त्यागभागित्वेनोद्देश्यत्वं देवतात्वमिति मणिकृतः। घृतस्य च जुहोत्यर्थतावच्छेदकीभूताग्नि-संयोगानुकूल-क्रियाश्रयत्वात् कर्मत्वम्। मूल्यग्रहणाप्रयुक्तस्वस्वत्वध्वंसपूर्वकपर-

---

स्याग्निसंयोगानुकूलक्रियायामन्वयः। विष्णोः कर्मत्वमिति।—तथा च देवोद्देश्यकस्वस्वत्वध्वंसपूर्वकस्वत्वजनकत्याग एव यजधात्वर्थ इति भावः। इतरथा–देवतायाः स्वत्वास्वीकारे। उद्देश्यतेति।—उद्देश्यतासम्बन्धेन–-स्वजनकत्यागोद्देश्यत्वरूपपरम्परासम्बन्धेनेत्यर्थः। देवतायाः स्वत्वध्वंसजनकत्यागोद्देश्यत्वं न प्रामाणिकमुक्तम् अत आह, अत एवेति।—देवतायाः स्वत्वध्वंसजनकत्यागोद्देश्यत्वादेवेत्यर्थः। हविस्त्यागः,—हविर्निष्ठस्वत्वध्वंस जनकेच्छा, तज्जन्यफलभागित्वेन—तज्जन्यस्वत्वध्वंसजन्यप्रीतिमत्त्वेन उद्देश्यत्वम्—इच्छोद्देश्यत्वम्, इच्छा च देवो हविर्निष्ठमत्स्वत्वध्वंसजन्यप्रीतिमान् भवतु इत्याकारिका, सैव च स्वत्वध्वंसजनिका, स्वत्वध्वंसे च तादृशेच्छाजन्यत्वं स्वरूपोत्कीर्त्तनमात्रं, न तु देवतालक्षणे तन्निवेशः। देवताया जन्यप्रीत्यनभ्युपगमे देवस्तादृशस्वत्वध्वंसजन्यमदीयप्रीतिविषयो भवतु इत्याकारिकेच्छा बोध्या, तथा च हविर्निष्ठस्वत्वध्वंसजन्यप्रीतिविषयत्वेन उद्देश्यत्वं देवतात्वमिति ध्येयम्। घृतवृत्तीत्यस्य क्रियायामन्वयः। मूल्यग्रहणेति—दानवारणाय प्रयुक्तान्तं त्यागविशेषणं, स्वत्वध्वंसद्वारा

स्वत्वजनकत्यागो (क) विक्रयः । मूल्यदानपुरःसरस्वस्वत्वोत्पादकस्वीकारः क्रयः । दत्तद्रव्यस्वस्वत्वजनकस्वीकारः प्रतिग्रहः, तत्र च गां विक्रीणीते क्रीणाति गृह्णाति वा इत्यादौ गोवृत्तिमूल्यग्रहणप्रयुक्तस्वस्वत्वध्वंसपूर्वकपरस्वत्वावच्छिन्नत्यागानुकूलकृतिमान् गोवृत्तिमूल्यदानप्रयुक्तस्वस्वत्वावच्छिन्नस्वीकारवान् गोवृत्तिदान-प्रयुक्तस्वस्वत्वजनकस्वीकारवानिति क्रमादन्वयधीः । सर्वत्र धात्वर्थतावच्छेदकतत्तत्फलाश्रयत्वेन गवादेः कर्मत्वम्, एवमनयैव दिशा सर्वत्र कर्मत्वमूह्यम् ॥१७॥

---

जनकत्वलाभाय स्वत्वध्वंसेति, दयान्वितात् मूल्यग्रहणप्रयुक्तव्याधधृतपक्ष्यादित्यागवारणाय परस्वत्वजनकेति (ख) । प्रतिग्रहवारणाय पुरःसरान्तं, मूल्यदानपूर्वकमिति तदर्थः । स्वीकारः,—इदं मम भवत्वित्याकारिकेच्छा । दत्तद्रव्येति—दानप्रयोज्येत्यर्थः, इदञ्च क्रयवारणाय । गोवृत्तीत्यस्य सर्वत्र स्वत्वेऽन्वयः(ग) ॥१७ ॥

---

(क) त्याग इच्छाविशेषः, स चात्र इदममुकस्य भवत्वित्याद्याकारकः ।

(ख) यत्र कश्चित् व्याधधृतं पक्षिणं दृष्ट्वा सञ्जातकरुणः व्याधाय तन्मूल्यं दत्त्वा तं पक्षिणं मोचयति, तत्र तादृशव्याधधृतपक्षित्यागे मूल्यग्रहणप्रयुक्तस्वस्वत्वध्वंसपूर्वकत्वसत्त्वादतिव्याप्तिवारणाय परस्वत्वजनकेति, तथाच तादृशत्यागे परस्वत्वजनकत्वाभावान्नातिव्याप्तिरिति भावः ।

(ग) तथाहि विक्रयोदाहरणे गोवृत्तीत्यस्य परस्वत्वेऽन्यत्र तु स्वस्वत्वेऽन्वयः इति भावः । तादृशन्तु परस्वत्वं स्वस्वत्वञ्च धात्वर्थतावच्छेदकफलं बोध्यम् ।

न चैवमपि पतेरधःसंयोगावच्छिन्नस्पन्दनार्थकतया तदवच्छेदकीभूताधःसंयोगवत्त्वाद् भूतलादेः कर्मत्वात्, वृक्षात् पर्णं भूतलं पततीति प्रयोगः स्यादिति वाच्यं, तथाविवक्षायामिष्टत्वात्, अत एव "द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैः" ( पा० २।१।२४ ) इति सूत्रे पतितशब्देनापि द्वितीयासमासविधानं, नरकं पतितो नरकपतित इत्युदाहरणञ्च साधु सङ्गच्छते । क्वचित् सप्तम्यपि साधुः भूतले पततीत्यत्र ग्रामे गच्छतीतिवत् । अन्ये तु तादृशफलशालित्वेऽपि भूतलादेर्न द्वितीया, द्वितीयार्थफलस्य हि सम्बन्ध्याकाङ्क्षायां

एवं—धात्वर्थतावच्छेदकवतः कर्मत्वे । तथाविवक्षायां—तादृशफलाश्रयतात्पर्य्ये, इष्टत्वात्, भूतलं पर्णं पततीति प्रयोगस्येत्यादिः । नन्वेवमनुभवविरोध इत्यत आह, अत एवेति ।—पतधातोः सकर्मकत्वादेवेत्यर्थः । नन्वेवं भूतले पर्णं पततीति प्रयोगस्यानुभवसिद्धतया स न स्यादत आह, क्वचिदिति ।—धात्वर्थपतनादौ परम्परयाऽन्वयतात्पर्य्ये इत्यर्थः( घ ) । भूतलस्य पतधात्वर्थतावच्छेदकफलशालित्वेऽपि न तदुत्तरं द्वितीया, इति वदतां मतमाह,—अन्ये त्विति । तादृशेति ।—पत-

(घ) स्ववृत्त्यधःसंयोगजनकत्वरूपपरम्परासम्बन्धेन तादृशस्पन्दनरूपपतने भूतलस्यान्वय इति भावः ।

भूतलादेरन्वयो वाच्यः, प्रकृते चाधःसंयोगरूपफल-
स्याधोवृत्तितयोपस्थितेराश्रयान्तर-निराकाङ्क्षत्वात्,
यद्वा,—पतधातोरकर्मकत्वं कर्त्तृभिन्नान्वयिफलाव-
च्छिन्नव्यापारबोधकस्यैव धातोः सकर्मकत्वात्,
यथा ग्रामं गच्छतीत्यादौ गम्यादेः। पतिर्हि पर्ण-
गतमधःसंयोगं बोधयति, न तु भूतलगतं, भूतल-

---

धात्वर्थतावच्छेदकेत्यर्थः। निराकाङ्क्षत्वादिति।—गच्छतीत्याद्युक्तौ संयोगावच्छिन्नक्रियोपस्थितौ कस्य संयोग इत्याकाङ्क्षोत्सर्गतो यथा जायते तथा पतधातुनाऽधःसंयोगावच्छिन्नस्पन्दोपस्थितौ न तादृशाकाङ्क्षा इति तादृशाकाङ्क्षास्थले एव द्वितीयानुशासन-तात्पर्य्यमिति भावः। अधःसंयोगः कुत्र इत्याकाङ्क्षाया अपि सम्भवादाह,—यद्वेति। कर्त्तृभिन्नान्वयीति।—कर्त्तृभिन्नान्वयि यत् फलं संयोगादि तदवच्छिन्नव्यापारबोधकस्यैवेत्यर्थः, तथाच ग्रामं गच्छतीत्यादौ कर्त्तृभिन्नं यत् ग्रामादि तदन्वयि-संयोगादिरूपफलावच्छिन्नव्यापारबोधकत्वात् गम्यादेः सकर्म्म-कत्वमव्याहतमिति। गम्यादेरिति।—सकर्मकत्वमिति विभक्ति-वैपरीत्येनान्वयः। ननूक्तविवक्षणेन पतेः कथं सकर्मकत्वमित्या-शङ्कां निरस्यति, पतिर्हीत्यादिना। पर्णगतं—पर्णनिरूपितं (ङ) एतच्चाधःसंयोग एवान्वेति। बोधयतीति।—तथाच भूतलं पततीत्यादौ अधोऽनुयोगिकसंयोगत्वरूपफलत्वावच्छेदकेनोप-

---

(ङ) पर्णनिरूपितं—पर्णप्रतियोगिकमित्यर्थः, एवमुक्तस्थलेऽपि बोध्यम्।

स्याधःसंयोगाभावात्,पर्णस्याधोभूतलमिति प्रत्यया-दित्यन्यदेतत्, अत एव भूतले पततीत्येव प्रयोगो न तु भूतलं पततीतीत्याहुः ॥ १८ ॥

स्थितस्य फलस्य वास्तविकपर्णनिरूपितस्यानुयोग्यन्तरान्वय-निराकाङ्क्षतया ( च ) भूतले तस्यान्वयबाधादेव (छ) न तादृश-प्रयोग इति भावः। भूतलनिरूपिताधःसंयोगस्यैव तत्र बोध इति भूतलस्य तादृशसंयोगप्रतियोगितया तत्रान्वयो निराबाध एवेत्याशङ्कामपनेतुमाह, न तु भूतलगतमिति ।—अधःसंयोगं बोधयतीति शेषः । कुतः ? इत्याकाङ्क्षायामाह, भूतलस्येति ।—अधःसंयोगाभावात् पर्णव्यापारप्रयोज्याधःसंयोगाभावादित्यर्थः, एतेन तादृशसंयोगस्य भूतले सत्त्वेऽपि (ज) न क्षतिरिति ध्येयम् । ननु पर्णं पततीत्यादिप्रयोगोऽनुपपन्नः, पृथिव्यधोदेशस्यैवाध-स्त्वात् तादृशाधःसंयोगानुकूलव्यापारस्य पर्णे बाधितत्वादित्यत आह, पर्णस्याधोभूतलमिति ।—व्यवहारादित्यर्थः । एतत्—भूतलनिष्ठपर्णाधस्त्वम्, अन्यत्—पृथिव्यधस्त्वादन्यदित्यर्थः । इत्येव प्रयोग इति एवकारव्यवच्छेद्यमाह,—न तु भूतलमिति । आहुरित्यनेनात्र मते एवास्वरसः सूचितः, स च नरकपतित इति द्वितीयातत्पुरुषानुपपत्तिरूपः (झ) ॥ १८ ॥

(च) धात्वर्थतावच्छेदकेऽधोदेशस्य संयोगानुयोगितया प्रविष्टत्वादेव तादृश-संयोगस्यानुयोग्यन्तरनिराकाङ्क्षत्वं बोध्यम् ।

(छ) तस्य—तादृशसंयोगस्य, अन्वयबाधात्— अनुयोगितयाऽन्वयबाधादित्यर्थः ।

(ज) सत्त्वेऽपि—समवायसम्बन्धेन सत्त्वेऽपि, न त्वनुयोगितयेति भावः ।

(झ) द्वितीयाश्रितेत्यादि निरुक्तानुशासनविरोधोऽपि बोध्यः ।

प्राञ्चस्तु ग्रामं गच्छति त्यजति वा, गम्यते त्यज्यते वा ग्राम इत्यादौ संयोगविभागयोः फलयोर्द्वितीयाकर्म्माख्याताभ्यां प्रत्यायनात्, अनन्यलभ्यस्पन्दनाद्यात्मकव्यापार एव तत्तद्धातो-रर्थः । न चैवं तत्तद्धातुयोगे द्वितीयादेः संयोग-त्वादिना फलविशेषबोधकत्वोपगमेन ग्रामं गच्छति-त्यजतीत्याभ्यां ग्रामवृत्तिसंयोगजनकस्पन्दनस्य ग्रामवृत्तिविभागजनकस्पन्दनस्य च लाभात् पर्य्यायतावारणेऽपि त्यजति-गच्छतीत्यनयोस्त्यागो

---

मतान्तरमाह,—प्राञ्चस्त्विति । ग्रामं गच्छति, ग्रामो गम्यते, त्यजति त्यज्यते इत्यादौ संयोगविभागरूपद्वितीयाकर्म्माख्याता-र्थान्वयवशात् तुल्यबोधकतारूपपर्य्यायतावारणेऽपि (ञ) तद-समभिव्याहृतस्थले, (ट) गच्छति गमनं, त्यजति त्याग इत्यादौ पर्य्यायता स्यादित्याशङ्कते,—न चैवमित्यादिना ।

---

(ञ) संयोगविभागरूपस्य द्वितीयाविभक्ति-कर्म्माख्यातयोरर्थस्यान्वयवशात् त्यजि-गमिधात्वोरर्थे स्पन्दनाद्यात्मकव्यापारेऽन्वयवशादित्यर्थः । तुल्यबोधकतेति ।—अयं भावः, —त्यजिगमिधात्वोः स्पन्दनाद्यात्मकव्यापाररूपार्थकत्वे तुल्यार्थबोधकत्वरूपैकपर्य्यायता स्यात्, तादृशधात्वर्थे द्वितीयाविभक्त्याद्यर्थस्य संयोगादेरन्वयवशात् विभिन्नार्थतया न तयोरेकपर्य्यायत्वमिति ।

(ट) तदसमभिव्याहृतस्थले—तयोर्द्वितीयाविभक्तिकर्म्माख्यातार्थयोरसमभिव्याहृत-स्थले ।

गमनमित्यनयोरपि पर्य्यायत्वं स्यादिति (ठ) वाच्यं, विभागसंयोगावच्छिन्नस्पन्दशाब्दत्वस्य त्यजिगम्योः कार्य्यतावच्छेदकत्वात् । एवञ्च यथायथं विभाग-संयोगावच्छिन्नस्पन्दे लक्षणां विना त्यजति-गच्छ-तीत्यनयोरबोधकत्वमेव, ( ड ) संयोगाद्यवच्छिन्न-स्पन्दशाब्दत्वञ्च जन्यजनकतासम्बन्धेन संयोगादि-स्पन्दोभयवैशिष्ट्यावगाहिशाब्दत्वं, तेन गम्यते

ननु त्यजति-गच्छतीत्यनयोरबोधकत्वापत्तिः, संयोगादिबोधक-पदाभावादित्यतः (ढ)तत्रेष्टापत्तिमाह, एवञ्चेति ।—संयोगाद्यव-च्छिन्नस्पन्दशाब्दत्वस्य गम्यादिधातुकार्य्यतावच्छेदकत्वे चेत्यर्थः । यथायथमिति ।—संयोगावच्छिन्नस्पन्दे गमधातोः, विभागाव-च्छिन्नस्पन्दे त्यजधातोः, लक्षणां विनेत्यर्थः । ननु संयोगावच्छिन्न स्पन्दशाब्दत्वं यदि जनकतासम्बन्धावच्छिन्नसंयोगप्रकारतानिरू-पितस्पन्दविषयताशालिशाब्दत्वं, तदा ग्रामो गम्यते इत्यादौ जन्यतासम्बन्धेन स्पन्दप्रकारकसंयोगविशेष्यकशाब्दत्वस्यासंग्रहः । यदि च जन्यतासम्बन्धेन स्पन्दप्रकारकसंयोगविशेष्यकशाब्दत्वं, तदा ग्रामं गच्छतीत्यादौ शाब्दबोधासंग्रह इत्यत आह, संयोगा-

(ठ) त्यजिगमिधातुद्वयस्यैव स्पन्दमात्रबोधकत्वादिति भावः ।

(ड) अबोधकत्वं—संयोगविभागावच्छिन्नस्पन्दाबोधकत्वमित्यर्थः । तथाच त्यजि-गम्योः स्पन्दमात्रे शक्तिः, विभागावच्छिन्नस्पन्दे संयोगावच्छिन्नस्पन्दे च लक्षणेति भावः ।

(ढ) अबोधकत्वापत्तिः,—संयोगविभागावच्छिन्नस्पन्दयोरबोधकत्वापत्तिः । संयो-गादिबोधकेति ।—संयोगादिबोधकद्वितीयाकर्म्माख्यातरूपपदाभावादित्यर्थः ।

त्यज्यते वा ग्राम इत्यादौ स्पन्दविशेषणककर्म्माख्यातार्थसंयोगादिविशेष्यकशाब्दस्य संग्रहः। भावाख्यातस्थले तु गमनमित्यादाविव संयोगाद्यवच्छिन्नस्पन्दे धातोर्लक्षणैव, न चैवं लक्षणयापि गमि-त्यजिभ्यां त्याग-गमनयोरबोधप्रसङ्ग(ण) इति वाच्यं, शक्तिलक्षणान्यतरसम्बन्धेन संयोगाद्यवच्छिन्नस्पन्दबोधकत्वानुपपत्तिनिर्णयानन्तरमेव गम्या-

द्यवच्छिन्नेति।—जन्यजनकभावसम्बन्धेन संयोगस्पन्दोभयवैशिष्ट्यावगाहिशाब्दत्वं संयोगविषयतानिरूपितजन्यताविषयतानिरूपितजनकत्व-विषयता-निरूपित-स्पन्दविषयताशालिशाब्दत्वं, जन्यतानिरूपितजनकत्वं जनके जन्यस्य सम्बन्धः, न तु जनकत्वमात्रं, जनकतानिरूपितजन्यत्वं जन्ये जनकस्य सम्बन्धः, न तु जन्यतामात्रम्, इति न किञ्चिदनुपपन्नं, जन्यत्वादिमात्रस्य सम्बन्धत्वे जन्यत्वातिरिक्तसंसर्गानवच्छिन्न-संयोगविषयतानिरूपित-जनकत्वातिरिक्तसंसर्गानवच्छिन्नक्रियानिष्ठविषयताशालिशाब्दत्वं. संयोगस्पन्दोभयवैशिष्ट्यावगाहिशाब्दत्वमिति ध्येयम्। नन्वेवं गम्यते इत्यादिभावाख्यातस्थले संयोगावच्छिन्नस्पन्दबोधकत्वं न स्यात्, संयोगादिबोधकपदाभावादित्यत आह,—भावाख्यातेति। अबोधप्रसङ्ग इति।—तथाच स्पन्दमात्रशक्तस्य गम्यादेः स्पन्दमात्रबोधेनैवोपपत्तौ तत्रानुपपत्त्यभावेन लक्षणाया मानाभावात् संयोगाद्यवच्छिन्नस्पन्दबोधस्य अभाव

(ण) गमिधातुना गमनस्य त्यजिधातुना त्यागस्याबोधप्रसङ्ग इत्यन्वितार्थो बोध्यः।

दिना विभागाद्यवच्छिन्नस्पन्दबोधनात्, एवञ्च पर-समवेततत्तद्धात्वर्थान्वयिफलविशेषशालित्वं (त) तत्तद्धात्वर्थकर्म्मत्वम्, अत एव गमिधातोः पूर्वदेशे न कर्मत्वं, तस्य संयोगरूपफलेनैवान्वयात् ; (थ) एवं पतेरपि गुरुत्वासमवायिकारणप्रयोज्यविजा-

---

इति भावः । निर्णयानन्तरम् इत्यनन्तरं गम्यादेः स्पन्दे शक्तिग्रहात् स्पन्दोपस्थितौ, संयोगे लक्षणाग्रहात् संयोगोपस्थितौ सत्यामिति पूरणीयम् । नन्वेवं धात्वर्थ-तावच्छेदकरूपफलशालित्वरूपकर्मत्वलक्षणमसङ्गतं, गम्यादेः स्पन्दमात्रवाचित्वेन धात्वर्थतावच्छेदकफलाभावादित्यतः प्राचीनमते कर्मत्वलक्षणमाह, एवञ्चेति ।—गम्यादेः स्पन्दमात्रवाचित्वे चेत्यर्थः ।—परसमवेतेति ।—गमधातोरित्युपलक्षणं, धात्वन्तरेऽपि बोध्यम् । पतधात्वर्थमाह —एवं पतेरपीत्यादिना । गुरुत्वासमवायिकारणप्रयोज्येत्यस्य क्रियैवार्थ इत्यत्र क्रियायामन्वयः । विजातीयक्रिया जातिविशेषवत्क्रिया, प्रयोज्यत्वञ्च

---

(त) परसमवेतक्रियाजन्यफलशालित्वरूपं कर्म्मतालक्षणं फले क्रियाजन्यत्वविशेषणमपहाय क्रियान्वयित्वविशेषणदानेन परिष्करोति,—एवञ्चेति ।

(थ) तस्य—गमधात्वर्थस्य, फलेनैवेत्येवकारेण विभागरूपफलव्यवच्छेदः ; तथाच जन्यजनकत्वसम्बन्धेन गमधात्वर्थस्पन्दान्वयिनः द्वितीयाद्यर्थसंयोगरूपफलस्य ग्रामे सत्त्वेन तस्य कर्म्मत्वं नानुपपन्नं, पूर्व्वदेशे तु तादृशसंयोगरूपफलाभावान्न तस्य कर्म्मत्वम् ।

तीयक्रियैवार्थः,(द)तस्य चाधःसंयोगफलेनैवान्वयः। एवं ददातीत्यादेरपि व्यापारमात्रार्थकत्वात् तत्र तत्तत्फलविशेषान्वयो बोध्य इत्याहुः॥ १९॥

स्वरूपसम्बन्धविशेषोऽनुभवसाक्षिकः। गुरुत्वासमवायिकारणेत्यादिप्रयोज्यान्तं पतनत्वजातिविशेषावच्छिन्नस्पन्दे परिचायकमात्रं, न तु शक्यतावच्छेदकघटकं, नातो गौरवम्। व्यापारमात्रार्थकत्वादिति।— तत्तत्फलविशेषः,—स्वस्वत्वध्वंसपूर्वकपरस्वत्वोत्पत्तिरूपः। न च तत्तद्धात्वर्थान्वयिफलशालित्वेनैवोपपत्तौ फलविशेषत्वविशेषणमनर्थकमिति वाच्यं घृतं जुहोतीत्यादौ धात्वर्थान्वय्यग्निसंयोगरूपफलवत्त्वमादायाग्नेः कर्मतावारणाय तादृशपदोपादानात्। न च साक्षाद्धात्वर्थान्वयित्वनिवेशेनैव तद्वारणमिति वाच्यं, तल्लाभायैव तदुपादानात्। अत्र मते आहुरित्यनेनास्वरसः सूचितः, स च गमनं त्याग इत्यादौ लक्षणाग्रहं विनाऽपि संयोगाद्यवच्छिन्नस्पन्दबोधस्यानुभवसिद्धतया तदनुपपत्तिरूपः। इदमत्रावधेयं,—फलस्य धात्वर्थतावच्छेदकत्वं न सम्भवति। गम्यते ग्राम इत्यादौ स्पन्दजन्यफलवानित्यन्वयबोधानुपपत्तेः, इति फले स्पन्दे चोभयत्रैव शक्तिः, इत्येव प्राचां मतम्; तदेव सम्यक्, ग्रामं गच्छतीत्यादौ द्वितीयार्थस्याधेयत्वं तस्य संयोगात्मकफले शक्यार्थेऽन्वयः, तस्य च जनकतासम्बन्धेनापरशक्यार्थे स्पन्देऽन्वयः। गम्यते ग्राम इत्यादौ स्पन्दरूपशक्यार्थस्य जन्यतासम्बन्धेनापरशक्यार्थसंयोगरूपफले, तस्य च ग्रामेऽन्वय इति नान्वयानुपपत्तिरिति केचिद्वदन्ति, तन्न मनोरमं, फलाव

(द) गुरुत्वरूपं यत् असमवायिकारणं तत्प्रयोज्येत्यर्थः।

कर्म च त्रिविधं, प्राप्यं विकार्य्यं निर्वर्त्त्यञ्चेति । संयोगादिक्रियाफलशालि प्राप्यं, यथा ग्रामं गच्छतीत्यादौ । क्रिया, यद्धर्मनाशकं (ध) फलं जनयति तद्विकार्य्यं, यथा काष्ठं लुनातीत्यत्र काष्ठपदेन लक्षणया अवयवा उच्यन्ते, लुनातिना

च्छिन्नस्पन्दशक्तिमत्यपि द्वितीयार्थफले आधेयतासम्बन्धेन ग्रामस्य. ताटृशसंयोगस्य च संयोगावच्छिन्नस्पन्देऽन्वयात् ; ग्रामं गच्छतीत्यादौ ग्रामवृत्तिसंयोगानुकूलस्पन्दानुकूलकृतिमानित्यन्वयबोधात्, ग्रामो गम्यते इत्यादौ धात्वर्थसंयोगावच्छिन्नस्पन्दस्याख्यातार्थसंयोगि ताटृशसंयोगस्य च ग्रामेऽन्वयात्. संयोगावच्छिन्न-स्पन्दजन्य-संयोग-वानित्यन्वय-बोधाच्चानुपपत्तेरभावादिति ध्येयम् ॥ १८ ॥

कर्म विभजते, कर्म चेति ।—गच्छतीत्यादौ गम्यादेर्ग्रामादिरिति शेषः । घटं जानातीत्यादौ घटादेः स्वमते निर्वर्त्त्यमध्येऽन्तर्भावस्य वक्ष्यमाणत्वान्न विभागव्याघातः, मतान्तरे ताटृशकर्म्मणः प्राप्यान्तर्भाव इति ध्येयम् । विकार्य्यनिर्वर्त्त्याभ्यामन्यत् कर्म प्राप्यमिति पर्य्यवसितलक्षणं बोध्यम् । यद्धर्मनाशकमिति ।—यस्य धर्म इति व्युत्पत्त्या यद्वृत्तिधर्म इत्यर्थः । तद्विकार्य्यमिति ।—इदञ्च प्रकृतिकर्मपदेनाप्यभिधीयते । ननु ताटृशक्रियया काष्ठनाश एव जन्यते, न तु तद्वृत्तिधर्मनाश इत्यत आह, काष्ठपदे-

(ध) यद्धर्म्मनाशकं—यद्वृत्तिधर्म्मनाशकम् ।

च आरम्भकसंयोगविरोधिविभागहेतुकुठारादि-व्यापारः, (न) तथाच काष्ठावयववृत्तितादृश-विभागावच्छिन्न-व्यापारानुकूल-कृतिमानित्यन्वय-बोधः, एवं प्राप्य-विकार्य्ययोः कारकत्वात् तादृश-फलाश्रयत्वाच्च मुख्यं कर्मत्वम्। निर्वर्त्त्यञ्च निष्पाद्यं,

नेति।—वस्तुतो ह्यारम्भकसंयोगविरोधिविभागावच्छिन्नव्यापार-रूप-"लु"धात्वर्थफलस्य तादृशविभागस्य काष्ठेऽभावात् तस्य त्वानुपपत्तिरित्यत आह, काष्ठपदेनेति। काष्ठपदेनावयव-लक्षणा तु तादृशविभागे काष्ठावयवस्य समवायसम्बन्धाव-च्छिन्नाधेयतासम्बन्धेनान्वयाभिप्रायेण, स्वाश्रयारभ्यत्वसम्बन्धाव-च्छिन्नाधेयतासम्बन्धेनान्वये (प) तु लक्षणां विनैवोपपत्तिरिति ध्येयम्? विरोधीति नाशकेत्यर्थः। तादृशेति।—आरम्भकसंयोग-नाशकेत्यर्थः। कारकत्वात्—क्रियानिमित्तत्वे सति क्रियान्वयि-त्वात्। मुख्यकारकत्वस्य मुख्यकर्मत्वाघटकत्वादाह, तादृश-

(न) अनारम्भकपदानुपादाने यत्र संयुक्तकाष्ठद्वयस्य कुठारादिना विभागः क्रियते, तत्रापि काष्ठं लुनातीतिप्रयोगापत्तेः। तदुपादाने च काष्ठद्वयसंयोगस्य न काष्ठारम्भकत्वं, किन्तु काष्ठावयवसंयोगस्यैव, परस्परावयवसंयोगेनैवावयविद्रव्योत्पत्तेः, तादृशसंयोग-नाशादेव द्रव्यनाशः, अत एवारम्भकसंयोगस्य द्रव्यारम्भस्य जनकः असमवायिकारणं यः संयोगः इत्यर्थो बोध्यः।

(प) स्वं तादृशविभागः, तस्याश्रयः काष्ठावयवाः तदारभ्यत्वञ्च काष्ठे सत्त्वात् तादृशपरम्परासम्बन्धेन विभागस्य काष्ठे सत्त्वेन काष्ठस्य कर्मत्वम्, अवयविनः अवयवा-रभ्यत्वनियमात्।

यथा कटं घटं वा करोतीत्यत्र कृञः कृतिमत्त्वार्थकत्वेन फलावच्छिन्नव्यापाराबोधकत्वात् कटादेस्तादृशफलानाश्रयत्वेन च गौणं कर्मत्वं, तच्च साध्यत्वेन विषयत्वम्, अत एव तत्र वीरणादेरुपादानत्वेन कृतिविषयत्वेऽपि वीरणं करोतीति न प्रयोगः। ननु धात्वर्थविधेयत्वेन निर्वर्त्त्यत्वे घटं पश्यतीत्यत्रातिरिक्तकर्म्मत्वापत्तिः, (फ) धात्वर्थविषयत्वमात्रेण तथात्वे कटं करोतीत्यत्र वीरणं

फलाश्रयत्वादिति।—मुख्यविकार्य्यकर्मलक्षणमिदं, न तु मुख्यभाक्तसाधारणं, तत्साधारणलक्षणन्तु अनुपदं दर्शनीयमिति। निर्वर्त्त्यञ्च निष्पाद्यमिति।—निष्पत्तिविषयत्वं, कृतिविषयत्वमिति यावत्, इदमपि विकृतिकर्मपदेनाप्यभिधीयते। तादृशेति।—धात्वर्थतावच्छेदकेत्यर्थः। साध्यत्वेनेति अभेदे तृतीया विषयत्वमिति, द्वितीयार्थे इति शेषः। अत एव—साध्यत्वस्य द्वितीयार्थत्वादेव। उपादानत्वेनेति।—उपादानत्वाख्यकृतिविषयत्वेन। तथात्वे—द्वितीयार्थत्वे।

मुख्यभाक्तसाधारणविकार्य्यकर्म्म च क्रियया वस्त्वन्तरनिष्पत्तये पूर्वभावविशिष्टस्य यस्यासत्त्वरूपो विकारो निर्वाह्यते तत्, तण्डुलानोदनं पचतीत्यादौ पाकक्रियया तण्डुलादिरूपधर्म्मिणो विनाशादेव ओदनादिरूपवस्त्वन्तरनिष्पत्तिरतः पूर्वभावविशिष्टस्य

(फ) घटे दर्शनविधेयत्वस्याभावादिति भावः।

करोतीति प्रयोगापत्तिः, मैवम्; उद्देश्योपादानीय-विषयतातिरिक्तविषयत्वेन धात्वर्थविषयस्यैव निर्व-र्त्त्यत्वात् (ब) ॥ २० ॥

धर्म्मिणोऽसत्त्वम्। कुसुमानि स्रजं करोतीत्यादौ काशान् कटं करोतीत्यादौ च कुसुमकाशादेः सत्त्वेऽपि रचनाविशेषविरह-रूपस्य कटसन्दर्भाभावरूपस्य च पूर्वभावस्यासत्त्वेन तद्विशिष्ट-स्यासत्त्वं रचनाविशेषादिनिष्पादकक्रियातो निर्वहति (भ), एवं काष्ठं भस्म करोति, सुवर्णं कुण्डलं करोतीत्यादावपि काष्ठ-रूपधर्म्मिणोऽसत्त्वरूपविकारस्य कुण्डलसन्दर्भाभावरूपविशेषण-विशिष्टसुवर्णस्यासत्त्वरूपविकारस्य च क्रियातो निर्वाह इति तेषां (म) सर्वेषामेव विकार्य्यकर्म्मता। तदुक्तं,—

"यदसज्जायते पूर्वं जन्मना यत् प्रकाशते।
तन्निर्वर्त्त्यं विकार्य्यञ्च कर्म्म द्वेधा व्यवस्थितम्॥
प्रकृत्युच्छेदसम्भूतं किञ्चित् काष्ठादिभस्मवत्।
किञ्चिद् गुणान्तरोत्पत्त्या सुवर्णादिविकारवत्"॥

(ब) उद्देश्यत्वाख्यकृतिविषयताभिन्नत्वे सति उपादानत्वाख्यकृतिविषयताभिन्नत्वे सति धात्वर्थविषयत्वमेव निर्वर्त्त्यत्वमित्यर्थः।

(भ) सन्दर्भस्य रचना ग्रन्थनं वाऽर्थः, तद्विशिष्टस्य रचनाविशेषविरहविशिष्टस्य कट-सन्दर्भाभावविशिष्टस्य च यथाक्रमं कुसुमकाशरूपधर्म्मिणोऽसत्त्वम् अभावः, तथाच विशे-षणाभावस्यापि विशिष्टाभावनियामकतयाऽत्र रचनाविशेषाभावादिरूपस्य विशेषणस्य स्रक्-कटादिकालेऽभावादेव स्रक्कटादिपूर्वकाले तादृशविशेषणविशिष्टस्यापि कुसुमकाशादेः स्रक्कटादिकालेऽभावसत्त्वेन तादृशाभावरूपविकारे तु क्रियया निर्वाह्यते, एवञ्च कुसुम-काशादेर्विकार्य्यकर्म्मत्वं स्रक्कटादेर्निर्वर्त्त्यकर्म्मत्वं बोध्यम्।

(म) तेषां—कुसुम-काश-काष्ठ-सुवर्णानाम्।

इति। अस्यार्थः,—यत् पूर्वमसत् पश्चाज्जायते उत्पत्त्याश्रयो भवति, तन्निर्वर्त्त्यम्। ननु सांख्यमते असदुत्पत्त्यभावात् सतो नाशस्याप्यभावः, अत एवोक्तं—

"नासतो विद्यते भावो नाभावो विद्यते सतः।"

भाव उत्पत्तिः, नाभावो न ध्वंसः। तन्मते जननमरणे आविर्भाव तिरोभावरूपे, प्रत्यक्षविषयता आविर्भावः। प्रत्यक्षाविषयता तिरोभावः। तन्मतेऽप्याह, जन्मनेति।—अभेदे तृतीया। तथाच जन्माभिन्नप्रकाशाश्रयो यत् तन्निर्वर्त्त्यं, प्रकाशः प्रत्यक्षं विकार्य्यञ्च कर्म्म द्वेधा व्यवस्थितमित्युक्तं दर्शयति प्रकृतीत्यादि। —प्रकृतेरुच्छेदं सम्भूतं प्राप्तम् (य) इत्यादिव्युत्पत्त्या प्रकृत्युच्छेदसम्भूतपदेन काष्ठादि बोध्यते, तत् किं स्वरूप[illegible] आह किञ्चित्काष्ठादि भस्मवदिति।—भस्मवत् काष्ठादेरित्यर्थः। स्वस्मिन् स्वनिष्ठधर्म्माविरोधिधर्म्मसम्बन्ध[illegible]सम्पादनेनान्यदपरं, (र) तत् किं स्वरूपमित्याकाङ्क्षायामाह सुवर्णादिविकारवदिति।—विकारवत् सुवर्णादेरित्यर्थः। यद्यपि काष्ठादि सुवर्णादेरित्येव [illegible]मुचितं, तथापि निर्वर्त्त्यकर्म्मस्वरूपज्ञापनाय तथोक्तिरित्यवधेयम्। तण्डुलानोदनं पचतीत्यादौ विकार्य्यकर्म्मोत्तरद्वितीयाया नाशकत्वमर्थः, निर्वर्त्त्यकर्म्मोत्तरद्वितीयाया उत्पादकत्वमर्थः, तथाच ओदनोत्पादको यस्तण्डुल-

---

(य) प्रकृतेः स्वभावस्य उच्छेदो विनाशः तं, सम्भृतं प्राप्तमित्यर्थः।

(र) अन्यदपरम्—अन्यादृशं विकार्य्यम्। स्वनिष्ठः सुवर्णनिष्ठो धर्म्मः सुवर्णत्वादिः तदविरोधिधर्म्मः कुण्डलत्वादिः तत्सम्बन्धरूपविकारः सुवर्णेऽस्ति तत्सम्पादनेनेत्यर्थः, इदन्तु कारिकास्थ "गुणान्तरोत्पत्त्या" इत्यस्य विवरणम्, अवस्थान्तरसम्पादनेनेत्यपि तदर्थो बोध्यः।

प्राञ्चस्तु कटादेर्गौणकर्म्मत्वेऽपि कारकत्वोपपत्त्यर्थम् अवश्यमवयवे लक्षणा, (ल) अन्यथा कटस्यासिद्धत्वेनाकारकत्वात् । न चैवं कदाचित् वीरणां

---

नाशकः पाकस्तदनुकूलकृतिमानित्यन्वयबोधः । तण्डुलमोदनं करोति दुग्धं दधि करोतीत्यादावपि विकार्य्यकर्म्मोत्तरद्वितीयाया नाशकत्वमर्थः, निर्वर्त्त्यकर्मोत्तरद्वितीयाया उत्पादकत्वमर्थः, अन्वयबोधस्तूह्यः ।

काशान् कटं करोति, कुसुमानि स्रजं करोति, सुवर्णं कुण्डलं करोतीत्यादौ काशादिरूपविकार्य्यकर्म्मोत्तरद्वितीयया उपादानत्वाख्यविषयताविशेषमेव बोधयति कटादिरूपनिर्वर्त्त्यकर्म्मोत्तरद्वितीयया पूर्ववदुत्पादकत्वमेव कृतौ बोधयति, तथाच काशोपादानककटोत्पादककृतिमानित्याद्याकारकस्तत्र बोधः । अधिकमन्यत्रानुसन्धेयम् ॥ २० ॥

क्रियानिमित्तत्वे सति क्रियान्वयित्वं मुख्यकारकत्वं, कृत्यर्थकभिन्नसविषयकधातुकर्म्मण एव गौणकारकत्वं, कृतिकर्म्मणस्तु मुख्यकारकत्वमेवेति केषाञ्चिन्मतमाह, प्राञ्चस्त्विति ।—कारकत्वोपपत्त्यर्थं—मुख्यकारकत्वोपपत्त्यर्थम्, असिद्धत्वेन—करणक्रियापूर्व्ववर्त्तित्वाभावेन, अकारकत्वात्—क्रियानिमित्तत्वाभावेन मुख्यकारकत्वाभावादित्यर्थः, तथाच घटं करोतीत्यादौ

---

(ल) तथा च कटावयवस्य करणक्रिया पूर्वं सिद्धत्वेन तत्र करणक्रियानिमित्तत्वसम्भवात् मुख्यकारकत्वोपपत्तिर्लक्षणाबीजन्तु करणक्रियानिमित्तत्वोपपत्तिस्तथा सत्येव तत्र मुख्यकारकत्वं सम्भवतीति भावः ।

करोतीति मुख्यतः (व) प्रयोगः स्यादिति वाच्यं, करोतिपद-समभिव्याहृत-कर्म्मवाचक-पदस्यावयवे निरूढ़लक्षणा(श)नियमादित्याहुः (ष)। ओदनं पचतीत्यादौ ओदनपदस्य तण्डुले तदवयवे वा लक्षणा, धातुना च रूपादिपरावृत्तिफलकोऽधः-सन्तापनादिः, तथाच धात्वर्थतावच्छेदकरूपादि-परावृत्तिशालित्वात् कर्मत्वं, तत्र च पूर्वरूपविरोधेन (स) रूपान्तरोत्पत्तिर्यदि विकारः तदा

---

घटावयवविषयककृतिमानित्याकारको बोधः। घटावयवस्य कृतिरूपक्रियानिमित्तत्वञ्च स्वसाध्यघटजनकत्वेन बोध्यम्। पूर्व्वरूपनाशस्य पूर्व्वरूपनाशानन्तररूपोत्पत्तिरूपस्य वा रूप-परावृत्तेरोदने न सम्भव इत्यतस्तण्डुले इति। तण्डुलस्यापि नाशसम्भवात् तण्डुले रूपनाशः रूपान्तरोत्पत्तिर्वा न सम्भवती-त्यतस्तदयववे इति। रूपपरावृत्तिः,—रूपनाशानन्तररूपोत्पत्तिः रूपनाशश्च। अधःसन्तापनम्—अग्निसंयोगः। तथा चेति।—तण्डुलावयववृत्तिरूपनाशानन्तररूपोत्पत्ति-जनकाग्निसंयोगानु-कूलकृतिमान् तादृशावयवरूपनाशानुकूलकृतिमान् वा इत्या-

---

(व) कदाचित्—कटसाध्यकृतिकाले, यत्काले कटः क्रियते तत्काले। वीरण-पदस्य कटे लाक्षणिकत्वे तु तादृशप्रयोग इष्ट एवेत्यत उक्तं मुख्यत इति।—वीरणपदस्य शक्त्या तादृशशक्यार्थतात्पर्य्येणेति तदर्थः।

(श) निरूढ़लक्षणा आजानिनीलक्षणा अनादितात्पर्य्यमूलिका वा।

(ष) अनन्तनिरूढ़लक्षणास्वीकारेण महागौरवमिति आहुरित्यनेन सूचितम्।

(स) पूर्व्वरूपविरोधेन—पूर्व्वरूपनाशेन।

विकार्य्यमध्ये, अन्यथा तु प्राप्यमध्येऽस्यान्तर्भावः । स्तोकं पचतीत्यादौ क्रियाविशेषणे द्वितीया, विशेषणविभक्तिवत्प्रयोगसाधुत्वार्थं, धात्वर्थे स्तोकस्याभेदः सम्बन्धः, नामार्थधात्वर्थयोर्भेदान्वयबोध एव प्रकारीभूतविभक्त्यर्थोपस्थितेस्तन्त्रत्वात् । नीलं घटमित्यादौ विशेषणविभक्तेरभेदार्थकत्वे तु तस्या अप्यभेदार्थकत्वमिति ॥ २१ ॥

करणत्वञ्च कारकान्तरेऽचरितार्थत्वे सति हेतुत्वं,

---

कारक ओदनं पचतीत्यादौ शाब्दबोधः । तदा विकार्य्यमध्ये इति ।—क्रिया यद्धर्म्मनाशकं फलं जनयति तद्विकार्य्यमित्युक्तत्वादिति भावः । अन्यथा—पूर्व्वरूपनाशानन्तररूपोत्पत्तेर्धात्वर्थतानवच्छेदकत्वे, अस्य—तण्डुलादिकर्मणः । तत्र प्रयोगसाधुत्वार्थम्—आकाङ्क्षासम्पादनार्थम् इत्यर्थः । अभेदार्थकत्वमिति ।—एतत्कल्पे एव निर्भरो बोध्यः. अन्यथा अश्वमेधेन यजेत अतिशयेन मूलयतीत्यत्र तृतीया, स्तोकं पचतीत्यादौ द्वितीयेत्यस्यानध्यवसायापत्तेः वैकल्पिकानुशासनाभावादिति ॥ २१ ॥

करणमाह. कारकान्तरे इति (ह) ।—स्वभिन्नकारके इत्यर्थः । स्वं लक्ष्यत्वेनाभिमतं दात्रादि । हेतुत्वं—फलहेतुत्वं. फलं धात्वर्थः,

---

(ह) कारकान्तरे इति सप्तम्या निष्ठत्वमर्थः, अन्वयश्चास्य स्वव्यापारमुत्पाद्यैव फलजनकत्वाभावरूपेऽचरितार्थत्वपदार्थे सति सप्तम्याः समानकालीनत्वमर्थः, तथा च स्वभिन्नकारकनिष्ठो यस्तादृशचरितार्थत्वाभावस्तत्कालीनं फलजनकत्वं करणत्वमिति ।

तत्र चरितार्थत्वञ्च तद्व्यापारमुत्पाद्यैव फलहेतुत्वं, कर्त्ता हि सिद्धं कुठारादिकं व्यापारयन् छिदा-लक्षणं फलमुत्पादयतीति करणे चरितार्थो न तु फले। कर्म्मापि करणे चरितार्थं, कर्मासिद्धौ करण-

करणत्वघटकचरितार्थत्वपदार्थव्याख्यां करोति, तत्रेति।—तत्र—करणत्वलक्षणे, घटकत्वं सप्तम्यर्थः, स्वभिन्नकारकव्यापारद्वारा तत्क्रियाया अजनकत्वे सति तत्क्रियाया जनकत्वमिति लक्षणस्यार्थः। स्वव्यापारद्वारा छिदादिक्रियाजनकदात्रादावसम्भव वारणाय स्वभिन्नकारकार्थककारकान्तरपदमितीदानीमभिमानः; अत एव दात्रादावितल्लक्षणस्यासम्भवमभिप्रेत्य दात्रधान्यादिसंयोगस्य लक्ष्यतां स्वीकृत्य कारकान्तरपदं परित्यज्य लक्षणं निष्कृष्यैव दर्शयिष्यते इति। सत्यन्तव्यावृत्तिमाह, कर्त्ता हीति।—सिद्धमित्यनेन कुठारादेश्छेदनादिक्रियायाः पूर्ववर्त्तित्वज्ञापनेन क्रियानिमित्तत्वरूपं कारकत्वं ज्ञापितम्। व्यापारयन्—कुठारादिनिष्ठसंयोगादिरूपव्यापारं जनयन् इत्यर्थः। करणे चरितार्थः,—करणव्यापारद्वारा फलहेतुतावानित्यर्थः, न तु फले—छिदाक्रियायाम्, अहेतुरिति शेषः, (क) तथाच सत्यन्तदलेनैव तद्वारणं न तु विशेष्यदलेनेति भावः। कर्मणः करणचरितार्थत्वमाह, कर्म्मापीति।—कर्म—धान्यकाष्ठादि।

(क) अहेतुरिति शेष इति।—अयं भावः,—कर्त्ता फले छिदाक्रियायामहेतुरिति न, अपि तु कुठारादिव्यापारोत्पत्तिद्वारा कर्त्तरि छिदाहेतुत्वमस्त्येव, अतस्तत्र फलहेतुत्वरूप-

व्यापारासिद्धेः, न हि छेदासिद्धौ कुठारादिकरणानां छिदानुकूलव्यापारः सम्भवति, अत एव करण-व्यापारविषयत्वं कर्मत्वमिति प्राञ्चः। अधिकरण-मपि कर्त्तृकर्मान्यतरव्यापारद्वारा क्रियानिष्पादकं, यथा गृहे चैत्रः स्थाल्यां तण्डुलं पचतीत्यत्र चैत्र-स्थितिरूपव्यापारसम्पादनेन गृहस्य, तण्डुलस्थिति-रूपव्यापारसम्पादनेन च स्थाल्याः कारकत्वम् (ख)

करणव्यापारेति।—दात्रादिजन्यधान्यादिसंयोगादीत्यर्थः। शिष्य-स्यान्तःप्रबोधाय पुनः स्पष्टयति,—न हीति। अत एव—कर्मणः करणचरितार्थत्वादेव। करणव्यापारविषयत्वमिति।—करणजन्यक्रियानुकूलव्यापाराश्रयत्वमित्यर्थः, इदमेव प्राचीनैः करणव्यापार्यत्वशब्देनोच्यते, कर्त्तुरपि दात्रादिजन्यसंयोगादि-रूपव्यापारवत्त्वादतिव्याप्तिरिति प्राञ्च इत्यनेन सूचितम्। अधिकरणेऽतिव्याप्तिशङ्कां निराकरोति,—अधिकरणमपीति। क्रियानिष्पादकमिति।—तथा चाधिकरणं कर्त्तृकर्मान्यतरचरि-तार्थमिति भावः। विशिष्य दर्शयति, गृहे चैत्रः इत्यादि।—चैत्रस्थितिरूपव्यापारश्चैत्रसंयोगः, एवमुत्तरत्र, गृहादौ तादृश-संयोगं विना पाकानिष्पत्तेरिति भावः।

विशेष्यदलमस्ति, किन्तु स्वभिन्नकारके करणे चरितार्थत्वसत्त्वेन स्वभिन्नकारकेऽचरि-तार्थत्वरूपसत्यन्तदलाभावात् कर्त्तुः करणत्वापत्तिवारणं बोध्यम्।

(ख) व्यापारद्वारा—व्यापारद्वारैव, व्यापारसम्पादनेन—व्यापारसम्पादनेनैव, स्थल एवमेव सावधारणं बोध्यम्। कारकत्वं—फलहेतुत्वमित्यर्थः।

सम्प्रदानापादानयोश्च न क्रियासामान्य-हेतुत्वं, (ग) दाने च स्वानुमतिप्रकाशनेन कर्त्तुरिच्छामुत्पाद्य सम्प्रदानस्य, पतनाश्रये पत्रादौ पतनप्रतिबन्धकसंयोगनाशकविभागमुत्पाद्य अपादानस्य, चरितार्थत्वमेवेति। एवञ्च, तदनुकूल-

---

विशेष्यदलव्यावृत्तिमाह —सम्प्रदानापादानयोरिति। न क्रियासामान्यहेतुत्वमिति।—न क्रियासामान्यप्रयोजनकत्वमित्यर्थः, तथाच यत्र सम्प्रदानस्यानुमतिप्रकाशनद्वारा न दानप्रयोजकत्वं, तत्र सम्प्रदानस्य करणत्ववारणं, यत्र वाऽपादानस्य पतनप्रतिबन्धकसंयोगनाशकविभागद्वारा न पतनप्रयोजकत्वं, यथा ऊर्द्ध्वक्षिप्तलोष्टादेर्वृक्षसंयोगानन्तरपतनव्यापारसत्त्वेऽपि वृक्षाल्लोष्टं पततीत्यादौ वृक्षरूपापादानवारणञ्च विशेष्यदलेनेति भावः। यत्रानुमतिप्रकाशनद्वारा कर्त्तुरिच्छोत्पादेन दाननिष्पत्तिः, तत्र सम्प्रदानस्य, यत्र वा तादृशविभागद्वारा (घ) पतननिष्पत्तिः, यथा वृक्षात् पर्णं पततीत्यादौ, तत्रापादानस्य च वारणं सत्यन्तदलेनैवेत्याह,—दाने

---

(ग) वृक्षाद् विभजते इत्यादौ विभागरूपक्रियाविशेषं प्रति अपादानादेर्हेतुत्वेऽपि पतनादिक्रियायामहेतुत्वेन क्रियासामान्येत्युक्तं, तथाच क्रियासामान्यं प्रति सम्प्रदानापादानयोर्न हेतुत्वम्; एतेन तत्र विशेष्यदलासत्त्वं सूचितं, तत्र कीदृशस्थले इत्यतः टीकायामाह —"तथाच यत्र" इत्यादि।

(घ) तादृशविभागेति।—पतनप्रतिबन्धकसंयोगनाशकविभागद्वारा इत्यर्थः।

व्यापारमद्वारीकृत्य तज्जनकत्वं, फलायोगव्यव-
च्छिन्नकारणत्वं (ङ) पर्य्यवसितं करणत्वमिति

---

चेति। चरितार्थत्वमेव—कर्त्तृचरितार्थत्वमेवेत्यर्थः। (च) नन्वेवं लक्षणं दात्राद्यसम्भवि, दात्रधान्यादिसंयोगे प्रतियोगिनो दात्रस्येवानुयोगिनः कर्मणो धान्यादेरपि प्रयोजकत्वात्, स्वभिन्नकारकं यत् धान्यादिकं तद्व्यापारीभूतस्वजन्यसंयोगद्वारैव दात्रादेः फलप्रयोजकत्वात्, यदि च तत्र तत्तल्लक्षणकर्त्तृनये दात्रादिकं न लक्ष्यं, तत्र करणत्वव्यवहारः कारणतामात्रनिबन्धनो भाक्तः। लक्ष्यन्तु दात्रसंयोगादिकमित्युच्यते, तदा फलानुकूलव्यापारमद्वारीकृत्य फलजनकत्वं करणत्वमिति लक्षणेनैव सामञ्जस्ये किं गुरुतरोक्तव्यर्थविशेषणघटितलक्षणेन? अतस्तथैवाह एवञ्चेति।—दात्रादौ लक्षणागमनेन तत्संयोगादेरेव लक्ष्यत्वे चेत्यर्थः। तदनुकूलेति। - फलानुकूलेत्यर्थः। नन्वेतादृश-

---

(ङ) फलायोगव्यवच्छिन्नकारणत्वम्, अव्यवहितपूर्वत्वसम्बन्धावच्छिन्नप्रतियोगिताकप्रतियोगिव्यधिकरणफलाभावविशिष्टान्यत्वे सति कारणत्वम्। तथाच व्यापारस्यैव सर्व्वत्र फलपूर्ववर्त्तितया कारणत्वेन तस्यैव एतन्मते करणत्वं बोध्यम्। अथवा यदव्यवहितोत्तरक्षणे न फलाभाव तत्त्वे सति फलहेतुत्वम्, अनन्यथासिद्धनियतपूर्ववर्त्तित्वमिति फलायोगव्यवच्छिन्नकारणत्वस्यार्थः।

(च) कर्त्तृचरितार्थत्वं—कर्त्तृनिष्ठचरितार्थत्वं, तथाच सम्प्रदानभिन्ने दानकर्त्तरि इच्छोत्पादनरूपकर्त्तृव्यापारमुत्पाद्यैव सम्प्रदानस्य दानक्रियाहेतुत्वम्, एवं अपादानभिन्ने पतनकर्त्तरि स्वपतनप्रतिबन्धकसंयोगनाशकविभागरूपकर्त्तृव्यापारमुत्पाद्यैवापादानस्य पतनक्रियाहेतुत्वमिति सम्प्रदानापादानयोः स्वभिन्ने कर्त्तृकारके चरितार्थत्वमेव नाचरितार्थत्वमिति तच्च सत्यन्तदलासत्त्वे नैवातिव्याप्तिवारणमिति भावः।

लभ्यम् ; एवञ्चैतन्मते चरमकारणत्वमेव करणत्व-मिति कुठारादौ करणपदं गौणमिति ॥ २२ ॥

वस्तुतस्तु व्यापारवत्कारणं करणमिति, तेन हस्तादौ कुठारादौ च नाव्याप्तिः । न चैवमदृष्ट-द्वारा कार्य्यमात्रे, विशेषतो ज्ञानादौ मनोयोग-द्वारा आत्मनः करणत्वापत्तिः, उपधेयसङ्करस्येष्ट-त्वात्, ( क ) अनुकूलकृतिसमवायित्वलक्षणकर्त्तृ-त्वस्य निरुक्तकरणत्वादन्यत्वेनैवोपाध्योरसङ्करात् ।

लक्षणस्य प्राचीनाभिप्रायविषयत्वे तेषां फलायोगव्यवच्छिन्नकार-णत्वरूपकरणलक्षणविरोध इत्यत आह—फलायोगेति ॥ २२ ॥

कुठारादौ स्वरसतस्तान्त्रिकाणां करणपदप्रयोगादाह,—वस्तुतस्त्विति । व्यापारेति ।—व्यापारसम्बन्धेन तत्क्रियाकारणत्वं तत्क्रियाकरणत्वमित्यर्थः । एवं—व्यापारवत्कारणत्वस्यलक्षणत्वे इत्यर्थः । अदृष्टद्वारा कार्य्यमात्रं प्रति आत्मनः कारणत्वेन करणत्वापत्तिः, एवं ज्ञानेच्छादिकं प्रति मनोयोगद्वारा कारण-त्वेन करणत्वापत्तिश्चेत्यर्थः । व्यापारसम्बन्धेन कारणत्वस्य विवक्षितत्वान्न दोषः, आत्मनः कार्य्यानुकूलादृष्टवत्त्वेऽपि तेन सम्बन्धेन कारणत्वे मानाभावादिति ध्येयम् । उपधेयेति ।—धर्मी-त्यर्थः, सङ्करः,—अभेदः, उपाध्योः—कर्त्तृत्वकरणत्वयोः. अस-ङ्करात्—भेदात्, तथाच विवक्षावशात् कर्त्तरि करणत्वव्यवहार

(क) उत्तरयति उपधेयसङ्करस्येति ।—तथाच कर्त्तृत्वाश्रयस्य करणत्वाश्रयस्यात्मनो ऽभिन्नत्वेऽपि कर्त्तृत्वकरणत्वयोर्भिन्नत्वान्नविभागाभावः ।

कर्त्तृभिन्नत्वेन करणलक्षणं विशेषणीयमिति कश्चित्। इत्थञ्चानुमितौ व्याप्तिस्मृतिः करणं, परामर्शो व्यापारः, चक्षुरादिश्च चाक्षुषादिज्ञाने चक्षुरादिसंयोगः, (ज) श्रोत्रस्य श्रावणज्ञाने श्रोत्र मनःसंयोगः, (झ) न तु शब्दो व्यापारः, शब्दाभावप्रत्यक्षे (ञ) तस्य व्यभिचारात्; न च शब्द-

इति भावः। कर्त्तरि करणत्वव्यवहारमसहमानानां मतमाह, कर्त्तृभिन्नत्वेनेति।—विवक्षावशात् कर्त्तरि करणत्वव्यवहार-विषयत्वस्य सर्व्वसम्मतत्वात् तदनुपपत्तिरित्यस्वरसः कश्चिदित्युक्त्या सूचितः। इत्थञ्च—व्यापारवत्कारणस्य करणत्वे चेत्यर्थः। संयोग इति।—व्यापार इत्यनुषज्यते। प्राचीनमतं (ट) दूषयति,—नत्वित्यादिना। शब्दं विनाऽपि श्रोत्रेण शब्दाभाव-श्रावणप्रत्यक्षजननात् तत्र शब्दरूपव्यापाराभावेन तादृशप्रत्यक्षं न स्यादिति भावः। शब्दो व्यापार इति।—इदमुपलक्षणं शब्दध्वंससाक्षात्कारे शब्दध्वंसोऽपि व्यापारो बोध्यः।

(ज) चक्षुरादिसंयोगः व्यापारः, चक्षुः करणम्।

(झ) ननु सर्व्वत्र सन्निकर्षस्य व्यापारत्वे समवायादिरूपसन्निकर्षस्य नित्यत्वात् तत्र करणजन्यत्वासम्भवेन न व्यापारत्वं सम्भवति, तज्जन्यत्वे सति तज्जन्यजनकस्यैव व्यापारत्वादिति कथं श्रावणप्रत्यक्षे श्रोत्रस्य करणत्वं व्यापारवत्त्वाभावादित्यत आह श्रोत्रस्येति।—श्रोत्रमनःसंयोगः व्यापारः, श्रोत्रं करणम्।

(ञ) शब्दाभावपदेन शब्दस्य ध्वंसः अत्यन्ताभावश्च बोध्यः।

(ट) शब्दतदभावयोः प्रत्यक्षे शब्दतदभावावेव व्यापाराविति प्राचीनमतम्।

श्रावणे शब्दो व्यापारः, लाघवेन श्रावणत्वावच्छिन्नं प्रत्येव श्रोत्रमनःसंयोगस्य व्यापारत्वात्, न तु शब्दश्रावणत्वावच्छिन्नं प्रति गौरवात् ॥२३॥

अन्ये तु कारकत्वे सति कर्त्तृव्यापारविषयत्वं करणत्वमिति, तच्च फलानुकूलकर्त्तृव्यापाराश्रयत्वं, कुठारादौ छिदानुकूलकर्त्तृजन्यः नमनोन्नमनादिमत्त्वमपि (ठ) फलानुकूलव्यापारः। न चैवं स्थाल्यादेरधिकरणस्यापि कर्त्तृव्यापार्य्यत्वात्तल्लातिव्याप्तिः; उपधेयसङ्करस्येष्टत्वात्। छिदादौ (ड)

लाघवेनेति।—शब्दश्रावणे शब्दस्य, शब्दध्वंसश्रावणे शब्दध्वंसस्य, शब्दाभावश्रावणे श्रोत्रमनःसंयोगस्य च, व्यापारत्वकल्पनापेक्षया श्रवणमनःसंयोगस्यैकस्यैव श्रावणत्वावच्छिन्नं प्रति व्यापारत्वकल्पने स्फुटतरमेव लाघवमिति भावः ॥ २३ ॥

तच्च—कर्त्तृव्यापारत्वञ्च। कर्त्तृव्यापारेति।—कर्त्तृजन्यव्यापारवत्त्वमित्यर्थः, व्यापारवत्त्वञ्च समवायविषयतान्यतरसम्बन्धेन बोध्यम्। समवायसम्बन्धस्थलमाह,—कुठारादाविति। एवम्—ईदृशलक्षणकरणे। अधिरकणस्यापीति।—अपिना कर्म्मादिसंग्रहः। कर्त्तृव्यापार्य्यत्वादिति।—कर्त्तृजन्यतण्डुलसंयोगादिरूपव्यापारवत्त्वादित्यर्थः। उपधेयेति।—धर्म्मिणोऽभेदेऽपि कर्म्म-

(ठ) अपिकारात् वृत्ते कुठारादिजन्यविजातीयसंयोगस्य छिदानुकूलव्यापारत्वं सूच्यते।

(ड) विषयतासम्बन्धेन कर्त्तृव्यापारवत्त्वं सङ्गमयति,—छिदादाविति।

चेष्टायाः प्रयत्नरूपकर्त्तृव्यापारविषयत्वेन, हस्तादेश्च तज्जन्यचेष्टावत्त्वेन करणत्वमिष्टमेव, चेष्टया हस्तादिना च छिनत्तीति प्रयोगस्य सर्वसम्मतत्वात्। कर्म्मादौ विवक्षावशात् प्रयोगो भवत्येव, तण्डुलेन स्थाल्या वा ओदनं साधयतीति गवा दानं साधयतीति प्रयोगात्। चैत्र आत्मना चैत्रेण

त्वाधिकरणत्वनिरुक्तकरणत्वादीनाम् उपाधीनां भेदात् न विभागव्याघात इति भावः। चेष्टायां कृतिरूपकर्त्तृव्यापारस्य विषयतासम्बन्धेन सत्त्वात्, हस्तादौ च चेष्टारूपकर्त्तृव्यापारस्य समवायेन सत्त्वात्, तयोरपि छिदादौ करणत्वापत्तिमिष्टापत्त्या परिहरति, छिदादाविति।—कर्त्तृव्यापारविषयत्वेन विषयतया कर्त्तृव्यपारवत्त्वेनेत्यर्थः, तज्जन्यचेष्टावत्त्वेन – समवायेन कर्त्तृजन्यचेष्टारूपव्यापारवत्त्वेनेत्यर्थः। इष्टमेवेति, कुत इत्याकाङ्क्षायामाह,—चेष्टयेत्यादि। कर्त्तृभिन्नकारकस्य विवक्षावशात् (ढ) करणत्वे इष्टापत्तिमाह,—तण्डुलेनेति। साधयतीति सिद्धिरुत्पत्तिः, तथाच या तण्डुलकरणकस्थाल्यधिकरणकान्नोत्पत्तिस्तदनुकूलव्यापारवानित्यन्वयबोधः न चैवं तण्डुलेन तण्डुलं पचतीति स्थाल्यां स्थाल्या पचतीत्यादिप्रयोगः स्यात् इष्टत्वात्। तण्डुलकरणकत्वबोधकतण्डुलकर्मकत्वबोधकसामग्र्योः परस्परकार्य्यप्रतिरोधात् नैकदोभयोर्बोध इत्यपि कश्चित्।

(ढ) विवक्षावशात्—तादृशव्यापारवत्त्वे तात्पर्य्यवशात्।

वा पचतीत्यप्रयोगात् कर्त्तुः शरीरस्य च वारणाय द्रव्यासमवायिकृतिमद्भिन्नत्वं विशेषणं देयम्; कृतिमत्त्वञ्च समवायेनावच्छेदकतया च बोध्यं, तेनात्मनः शरीरस्य च व्युदासः, विशिष्टाभावाच्च(ग) हस्तादिसंग्रहः, इदञ्च न व्याप्तिस्मृत्यादिसाधारणं, तत्र च पूर्वनिरुक्तमेव करणत्वम्, इत्यञ्च करणपदं नानार्थमेवेत्याहुः ॥ २४ ॥

गवेति।—गोकरणकदानोत्पत्त्यनुकूलव्यापारवानित्यर्थः, एवमुत्तरत्र। ननु कर्त्तुरपि करणत्वापत्तिः, आत्मनि कर्त्तरि कृतिरूपकर्त्तृव्यापारस्य, कर्त्तृशरीरे च चेष्टारूपकर्त्तृव्यापारस्य सत्त्वादित्यत आह,—चैत्र इति। चैत्रेणेति—चैत्रशरीरेणेत्यर्थः। द्रव्यासमवायीति।—द्रव्यासमवायित्वविशेषणविरहात् विशिष्टाभावो हस्तादेरिति भावः। ननु व्याप्तिस्मृतावनुमितिकरणत्वं न स्यात्, तत्र कर्त्तृव्यापारानाश्रयत्वादित्यत आह,—इदञ्चेति। तत्र—व्याप्तिस्मृतौ। निरुक्तमिति।—वस्तुतस्त्वित्यादिनोक्तव्यापारवत्कारणत्वं करणत्वमित्यर्थः। नानार्थमिति।—इष्टमेवेति शेषः। अत्र च आत्मानमात्मना वेत्सीत्यादि महाकवि-कालिदासप्रयोगानुपपत्तिश्चिन्त्या ॥ २४ ॥

(ग) वारणाय—करणत्ववारणाय। द्रव्यासमवायीति।—द्रव्यासमवायी समवायसम्बन्धेन द्रव्यवद्भिन्नो यः कृतिमान् तद्भिन्नत्वमित्यर्थः। विशेषणं देयं—निरुक्तकरणलक्षणे विशेषणतया निवेशनीयम्। तथा चात्मनः द्रव्यासमवायित्वेऽपि समवायसम्बन्धेन कृतिमत्तया शरीरस्य चान्त्यावयवितया द्रव्यासमवायित्वेऽपि अवच्छेदकतासम्बन्धेन कृतिमत्तया तद्भिन्नत्वविरहात् तयोः करणत्वापत्तिव्युदासः। विशिष्टाभावाच्चेति।—हस्तादेः

परशुना छिनत्तीत्यादौ निरुक्तकरणत्वं तृतीयार्थः, प्रकृत्यर्थस्य तत्राश्रयत्वेन, धात्वर्थस्य छिदादेश्च निरूपकत्वेनान्वयः, इत्यश्च परशुनिष्ठ-करणत्व-निरूपक-छिदानुकूलकृतिमानित्यन्वयधी-रिति प्राञ्चः। परशुना छिनत्ति न दात्रेणेत्यादौ निरूपकत्वादेः संसर्गस्य प्रतियोगितावच्छेदक-सम्बन्धत्वाभावात् नञर्थान्वयानुरोधेन निरुक्त-करणता-(त)-निरूपितजन्यत्वमेव तृतीयार्थः, तत्र

---

प्राचां मते परशुना छिनत्तीत्यादौ शाब्दबोधमाह, परशुना छिनत्तीत्यादाविति।—निरुक्तकरणत्वं व्यापारवत्कारणत्वरूपं तज्जन्यव्यापारवत्कारणत्वरूपं वा करणत्वमित्यर्थः। प्रकृत्यर्थस्य—परश्वादेः, तत्र—करणत्वे, आश्रयत्वेन—आधेयत्वेन, तथाच प्रकृत्यर्थस्य आधेयत्वसम्बन्धेन तृतीयार्थे करणत्वे, तादृशकरणत्वस्य निरूपकत्वसम्बन्धेन धात्वर्थे, धात्वर्थस्य कृतौ, कृतेश्च प्रथमान्तपदोपस्थाप्येऽन्वय इत्यर्थः। निरुक्त करणतानिरूपितेति।—परशुनिष्ठकरणतानिरूपितेत्यर्थः। एतच्च तृतीयार्थजन्यत्वस्यपरिचायकमात्रं, न तु तृतीयार्थे तस्य

---

शरीरावयवत्वेन तत्र शरीरस्य समवायसम्बन्धेन सत्त्वात् न तत्र समवायसम्बन्धेन द्रव्य-वद्भिन्नत्वमिति द्रव्यासमवायित्वरूपविशेषणाभावेन द्रव्यासमवायिकृतिमद्भेदरूपविशिष्टाभाव-सत्त्वाच्चेत्यर्थः।

(त) प्राचां मते दोषं प्रदर्शयन् नव्यमतमाह—परशुनेत्यादि। तथा चायं भावः—

निरूपकतया प्रकृत्यर्थस्य आश्रयतया च धात्वर्थस्यान्वयः, इत्यञ्च परशुनिरूपित (तादृश) जन्यताश्रय-च्छिदानुकूल-कृतिमानित्यन्वयधीरिति नव्याः (थ) ॥२५॥

प्रवेशः अन्वयादेव तस्य लाभादित्यवधेयम्। तत्र—तादृशजन्यतायां, निरूपकतया—निरूपितत्वसम्बन्धेन, स्वविशेष्यान्वयिनोऽन्वयित्वरूपविशेषणत्वनियमेन निरूपितत्वसम्बन्धेन परशुनिष्ठकरणतावत्त्वादेव करणतानिरूपितत्वं जन्यताया इति सूचयितुं जन्यतायांनिरूपितान्तप्रदर्शनम् (द)। तथाच परशुनिरूपितं यत् जन्यत्वं तदाश्रय-च्छिदानुकूलकृतिमानित्यन्वयधीरेव नव्यमतसिद्धेति ॥ २५ ॥

निरूपकतासम्बन्धेन परशुनिष्ठकरणतावति छेदे निरूपकतासम्बन्धेन दात्रनिष्ठकरणताया अभाववत्त्वबोधस्यासम्भवः, निरूपकत्वादिसम्बन्धस्य वृत्त्यनियामकत्वेन प्रतियोगितानवच्छेदकतया तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावाप्रसिद्धेः, अतस्तत्र प्राचां मते नञर्थान्वयो न सम्भवतीति तदन्वयानुरोधेन नव्यमतमाह, निरुक्तकरणतेति।

(थ) तथाच नव्यमते जन्यतायास्तृतीयार्थत्वेन धात्वर्थच्छिदादौ जन्यतायाः स्वरूपसम्बन्धेन सत्त्वात् परशुना छिनत्ति, न दात्रेणेत्यादौ धात्वर्थे स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताक-दात्रनिरूपितजन्यत्वाभाववत्त्वं प्रतीयते इति न काऽप्यनुपपत्तिः।

(द) अयं भावः,—परशुनिरूपितत्वस्य निरूपितत्वसम्बन्धेन परशोर्वा जन्यतायामन्वये एव परशुनिष्ठकरणतानिरूपितत्वस्य निरूपितत्वसम्बन्धेन तादृशकरणताया वा जन्यतायामन्वयो सम्भवति। स्वविशेष्यान्वयिनि स्वस्य पारतन्त्र्येणान्वये एव स्वस्य विशेषणत्वनियमात् इति सूचयितुं परशुनिरूपितजन्यतेत्यादि।

जटाभिस्तापस इत्यत्र तृतीया न करणत्वे किन्तु विशेषणत्वे, तच्च प्रकृते वैशिष्ट्यं, जटाभिस्तापस इत्यस्य जटाविशिष्टस्तापस इत्यर्थः, अत्र चोपलक्षणत्वेनाभिधानम्, उपलक्षणत्वञ्च बोध्येतरव्यावृत्त्यनवच्छेदकत्वे सति तत् (ध) समानाधि-

कारकाद्यर्थनिर्णय इत्यादिपदग्राह्यापपदविभक्त्यर्थं प्रसङ्गादाह,—जटाभिरित्यादिना। न करणत्वे इति।—तत्र सप्तम्यर्थो बोधकत्वं, तथाच करणत्वबोधिका तृतीया नेत्यर्थः, असम्भवादिति भावः। प्रकारत्वरूपविशेषणत्वं वा प्रकृतेऽसम्भवीत्यत आह, तच्चेति।—विशेषणत्वञ्चेत्यर्थः। जटाविशिष्ट इति।—जटासम्बन्धवत्तापस इत्यर्थः। नन्वेवं शमदमादिना तापस इत्यपि प्रयोगः स्यात् इत्यत आह, अत्र चेति।—अव्यवहितपूर्वोक्तजटासम्बन्धविषयताशालिबोधे इत्यर्थः। सप्तम्यर्थो निष्ठत्वम्। उपलक्षणत्वेन—उपलक्षणत्वविषयतावत्ताभिप्रायेण, अभिधानं—तृतीयाविधायकसूत्राभिधानमित्यर्थः, उपलक्षणत्वस्य स्वविशेष्यान्वयित्वरूपस्य प्रकृते विवक्षणे शमदमादिना तापस इत्यादि प्रयोगस्य वारणासम्भवादाह,—उपलक्षणत्वञ्चेति। बोध्यः—तापसः, व्यावृत्तिः—भेदः, तथाच प्रकृते तापसेतरभेदानवच्छेदकत्वे सति तापसेतरभेदसमानाधिकरणत्वं पर्य्यवसितम्, अवच्छेदकत्वञ्चान्यूनानतिरिक्तवृत्तित्वरूपं ग्रन्थकृतैवानुपदं व्यक्तीकरिष्यते, तदग्रहणत्वेन तापस इत्यादि प्रयोगाय अन्यूनत्वनिवेशः प्रमेय-

(ध) तत्पदं बोध्येतर[illegible]

त्वेन घट इत्यादिप्रयोगाय अनतिरिक्तत्वनिवेशः, घटत्वेन पट इत्यादि प्रयोगवारणाय बोध्येतरभेदसामानाधिकरण्यनिवेशः। इदमत्रालोचनीयं,—जटाभिस्तापस इत्यादौ तृतीयार्थः सम्बन्धमात्रं, तत्र तापसेतरभेदान्यूनवृत्तिभिन्नतापसेतरभेदानतिरिक्त-वृत्तिभिन्न-तापसेतरभेद-समानाधिकरण-जटाप्रतियोगिकत्वं जटायाः संसर्गः (न), तावतैव तादृशोपलक्षणत्वबोधोत्पत्तिः, तथाच तादृशसंसर्गेण जटाविशिष्टो यः सम्बन्धः (प) तद्वान् तापस इत्येवाकाङ्क्षावैचित्र्यात्तत्र बोधः, न तु तादृशोपलक्षणत्वस्यापि तृतीयार्थतामुपगम्य तापसेतरव्यावृत्त्यनवच्छेदकतादृशभेदसमानाधिकरणजटासम्बन्धवान् इत्याकारको बोधः, तथा सति संख्यातिरिक्तसुबर्थस्य प्रकृत्यर्थविशेष्यत्वेनैवान्वयस्यैव व्युत्पत्तिसिद्धत्वेन तादृशव्युत्पत्तिविरोधापत्तेः, सम्बन्धतावत् तादृशतृतीयार्थभेदं (फ) निवेश्य व्युत्पत्तिकल्पने गौरवात्, तापसादिरूपविशेष्यभेदेन शक्त्यानन्त्यापत्तेः, उक्तप्रकारेणैव सामञ्जस्ये तादृशार्थे तृतीयाशक्तिकल्पनाया अन्याय्यत्वाच्चेति। अथ घटत्वेन पट इत्यादौ पटेतरव्यावृत्त्यनवच्छेदकघटत्वप्रतियोगिकत्वसम्बन्धेन घटत्वविशिष्टसम्बन्धवान् पट इत्येतादृशबोधस्यैव स्वीकरणीयतया तादृशसम्बन्धेन घटत्वविशिष्टसम्बन्धस्य पटेऽसत्त्वादेव तादृशप्रयोगवारणसम्भवेनोपलक्षणत्वघटकतया तादृशभेदसामानाधिकरण्यविशेषणं व्यर्थमिति

---

(न) प्रकृत्यर्थभूताया जटायाः तृतीयाविभक्त्यर्थे समवेतत्वादिसम्बन्धेऽन्वयसम्पादकः संसर्गः निरुक्तजटाप्रतियोगिकत्वमिति भावः।

(प) सम्बन्धः,—समवेतत्वादिसम्बन्धः, स एवात्र तृतीयाविभक्तेरर्थः।

(फ) संख्यातिरिक्तसुबर्थे तादृशतृतीयाविभक्त्यर्थभेदं निवेश्येत्यर्थः।

करणत्वं, जटाया अतापसव्यावृत्त्यनवच्छेदकत्वात्, शमदमादिमत्त्वस्यैवातापसव्यावृत्त्यन्यूनानतिरिक्त-वृत्तित्वेनावच्छेदकत्वात्। न चैवं शमदमादिना तापस इति न स्यात्, इष्टत्वात्। विवक्षावशा-दुक्तप्रयोगस्येष्टत्वे च विशेषणोपलक्षणसाधारणं

चेन्न, तस्य तत्रैव तात्पर्य्यात्, घटत्वं पटे उपलक्षणम् इत्यादि व्यवहारवारणाय तादृशभेदसामानाधिकरण्यरूपविशेष्यदल-मित्यपि कश्चित्। जटायां निरुक्तोपलक्षणत्वसत्त्वं दर्शयति, जटाया इत्यादि।—जटाशून्यतापसे तापसेतरभेदसत्त्वात् जटाया-स्तादृशभेदान्यूनवृत्तिभिन्नत्वात्, तापसेतरेऽपि जटासत्त्वात् जटायास्तादृशभेदानतिरिक्तवृत्तिभिन्नत्वाच्च निरुक्तोपलक्षणत्वं जटायामबाधितमेवेति भावः। शमदमादिमत्त्वे तादृशोपलक्षण-त्वस्यासत्त्वं दर्शयति, शमदमादीति।—अन्यूनानतिरिक्तवृत्ति-त्वेनेति अभेदे तृतीया, तादृशान्यूनानतिरिक्तवृत्तित्वाभिन्नाव-च्छेदकत्वादित्यर्थः। एवं—शमदमादिमत्त्वस्य तापसादीतर-व्यावृत्त्यवच्छेदकत्वे इत्यर्थः। विवक्षावशात्—प्रतियोगि-कत्वमात्रसंसर्गेण शमदमादिमत्त्वप्रकारेण तृतीयार्थविशेष्य-प्रकारकबोधतात्पर्य्यवशात्, (ब) उक्तप्रयोगस्य—शमदमादिना तापस इत्यादिप्रयोगस्य। विशेषणोपलक्षणेति।—विशेषणं—

(ब) तृतीयार्थः सम्बन्धः, तत्र प्रतियोगिकत्वसम्बन्धेन शमदमादिवैशिष्ट्यं, तादृश-सम्बन्धः तापसादौ प्रकारतया भासते, तथाहि शमदमादिविशिष्टसम्बन्धवान् तापस इत्या-कारकबोधतात्पर्य्यवशादित्यर्थः।

वैशिष्ट्यमात्रं नियामकं, न तूपलक्षणतामात्रं नियामकम् ॥२६॥

विशेष्यतापसादीतरव्यावृत्त्य वच्छेदकं शमदमादीत्यर्थः, उपलक्षणं—विशेष्यतापसादीतरव्यावृत्त्यनवच्छेदकं जटादीत्यर्थः, तत्साधारणं—प्रतियोगिकत्वसम्बन्धेन तत्प्रकारकबोधवृत्ति, वैशिष्ट्यमात्रं—वैशिष्ट्यविषयतामात्रं, निरुक्तोपलक्षणत्वविषयत्वाघटितवैशिष्ट्यविषयताघटितधर्म (भ) इति यावत्, नियामकं—जन्यतावच्छेदकं, वैशिष्ट्यार्थकतृतीयाघटितवाक्यस्येति शेषः । उपलक्षणत्वमात्रं—निरुक्तोपलक्षणत्वविषयताघटितधर्ममात्रं, न नियामकं—न जन्यतावच्छेदकमित्यर्थः, वैशिष्ट्यार्थकतृतीयाघटितवाक्यस्येति शेषः, तथाच शमदमादिना तापस इत्यादि प्रयोगस्य प्रामाणिकत्वे तादृशतृतीयाघटिताकाङ्क्षायाः प्रतियोगिकत्वसम्बन्धेन तादृशतृतीयाप्रकृत्यर्थविशिष्टवैशिष्ट्यविषयताशालिशाब्दत्वमेव जन्यतावच्छेदकं वाच्यम् ; तच्च रूपम् उपलक्षणत्व-विषयता-शालि-बोध-तात्पर्य्यस्थलीय बोध-साधारणं, न तूपलक्षणत्वविषयताघटिततादृशविषयताशालिशाब्दत्वस्य तादृशतृतीयाघटिताकाङ्क्षाजन्यतावच्छेदकत्वं स्वीकरणीयमिति हृदयम् । इदन्तु बोध्यं,—वैशिष्ट्यञ्चात्र नाधिकरणत्वं सम्बन्धिता मात्रं वा, प्रमेयत्वेन घट इत्यपि प्रयोगापत्तेः, परन्तु अतद्व्यावृत्तत्वं, तथाच जटाभिस्तापस इत्यादौ अजटव्यावृत्तिमान् (म) तापस इत्याकारकान्वयबोधो दर्शितः, तत्र अजट-

(भ) वैशिष्ट्यविषयता—सम्बन्धविषयता, एवमुत्तरत्रापि बोध्यम् ।

(म) अजटव्यावृत्तिमानित्यत्राजटं जटाशून्यं जटाभाववत्, तद्व्यावृत्तिमान् तद्भेदवान्;

व्यावृत्तिमान् जटाभावाभाववानित्यर्थः, प्रमेयत्वाभावाप्रसिद्धया प्रमेयत्वाभावाभावबोधासम्भवेन न तादृशप्रयोगः। अथाभावत्वावच्छिन्नाभावो न तृतीयार्थः, तस्याप्रसिद्धत्वात्, नाप्यभावप्रतियोगिकाभावः घटत्वेन पट इत्यपि प्रयोगापत्तेः, घटत्वाभावप्रतियोगिकाभावस्य पटे सत्त्वात् (य) ; नापि जटाद्यभावत्वावच्छिन्नाभावः, प्रकृत्यर्थस्य जटाया अन्वयानुपपत्तेः, शक्त्यानन्त्यापत्तेश्च (र) मैवं, स्वनिष्ठावच्छेदकताकभेदवत्त्वसम्बन्ध एव तृतीयार्थः; अवच्छेदकता चाभाववत्तासम्बन्धावच्छिन्ना ग्राह्या, तथाच जटाभिस्तापस इत्यादौ अभाववत्त्वसम्बन्धावच्छिन्न-जटानिष्ठावच्छेदकताकभेदवान् तापस इत्याद्याकारकस्तत्र बोध इत्यलमप्रस्तुताभिधानेनेति (ल) ॥ २६ ॥

---

तथाच धर्म्मिभेदस्य धर्म्मात्यन्ताभावस्वरूपत्वनियमात् जटाभाववद्भेदस्य जटाभावाभावस्वरूपतया जटाभावाभाववानिति बोधो बोध्यः।

(य) घटत्वाभावो घटत्वञ्च एतदुभयाभावस्यापि घटत्वाभावप्रतियोगिकाभावतया तादृशाभावस्य पटे सत्त्वादिति भावः।

(र) अन्वयानुपपत्तेः, तृतीयाविभक्त्यर्थे जटाद्यभावाभावे इति शेषः। शक्त्यानन्त्यापत्तेः,—तृतीयाविभक्त्यर्थस्य जटादिघटितत्वेन जटादिभेदेन तृतीयाविभक्तिशक्तेरानन्त्यापत्तेरित्यर्थः।

(ल) इदन्तु बोध्यम् ;—प्रकृत्यर्थस्य निरुक्तवैशिष्ट्यं यत्र वर्त्तमानतया प्रत्याय्यते, तत्र विशेषणत्वेन यत्र चावर्त्तमानत्वेन, तत्रोपलक्षणत्वेन व्यपदिश्यते यथा जटाभिस्तापसः काकैर्गृहमित्यादौ जटादेर्वर्त्तमानत्वेन व्यावर्त्तकत्वं, काकादेश्च तदानीमसत्त्वेऽपि उड्डतत्वणवत्त्वादिरूपधर्म्मान्तरोपस्थितिद्वारा गृहादिव्यावर्त्तकत्वमिति, इत्थञ्च विशेषणं तदाभावाभाववत्त्वम्, उपलक्षणञ्च प्रतियोगिव्यधिकरणस्य तदभावस्याभाववत्त्वमित्यपि वदन्ति।

अक्ष्णा काणः, पादेन खञ्जः, मुखेन विलोचन इत्यादौ "येनाङ्गविकारः" (२।३।२० पा०) इति सूत्रेण तृतीया, येनाङ्गेनाङ्गिनो विकारो हानिराधिक्यं वा लक्ष्यते, तदङ्गवाचकाच्छब्दात् तृतीया इति सूत्रार्थः, इत्यञ्च तृतीयाया वृत्तित्वमर्थः, तच्चेह व्युत्पत्तिवैचित्र्यात् काणादिपदार्थैकदेशे विकारेऽन्वेति। काणत्वञ्च वहिरवच्छेदेन चक्षुःशून्यगोलकवत्त्वं, जातप्रसवान्धस्याकाणत्वे च चक्षुष्मद्गोलकवत्त्वे सतीति विशेषणीयम्, एकेनार्द्धेन वा चक्षुषा पश्यन्नपि काण एव, एकगोलकेऽर्द्धगोलके वा वहिरव-

इत्यञ्चेति।—निष्कृष्टे सूत्रार्थे चेत्यर्थः। ननु तादृशान्वयस्य व्युत्पत्तिविरुद्धत्वादाह - व्युत्पत्तीति. वहिरिति।—गोलकस्य वहिरवयवावच्छेदेनेत्यर्थः, वहिःपदस्य वाह्यवस्तुघटादिपरत्वे निमीलितनयनस्यापि तादृशवहिरवच्छेदेन गोलकस्य चक्षुरभाववत्त्वात् तस्य काणत्वापत्तिवारणं न सम्भवतीति बोध्यम्। पश्चादन्धस्य काणत्वस्येष्टत्वादाह, जातेति।—जन्मान्धस्य इत्यर्थः, जन्मावधिदर्शनाभाववत इति यावत्। विशेषणीयमिति, काणपदशक्यतावच्छेदकगर्भे इति शेषः। एकगोलकेऽर्द्धगोलके वा वहिरवच्छेदेन चक्षुरभाववत्त्वात् तस्य काणत्वापत्तिमिष्टापत्त्या

च्छेदेन चक्षुरभावात्, गोलके उपघाते तदवच्छेदेन चक्षुरभावात् काणत्वं, यदि च तद्गोलकेऽवच्छेदेन चक्षुःसत्त्वेऽपि उपघातादेव न चाक्षुषं, तदोपहत-गोलकवत्त्वेन काणत्वम्। अक्ष्णेति (व) पदसमभि-व्याहारस्थले च काणपदं चक्षुःशून्यविशिष्टस्योप-

---

परिहरति—एकेनेति। ननु गोलके उपघातरूपदोषात् यत्र न चाक्षुषं तत्र वहिरवच्छेदेन चक्षुःसत्त्वात् काणत्वं न स्यादत आह, गोलके उपघाते इति।—चक्षुःसत्त्वेपि दर्शनप्रतिबन्धकपित्तादि-दोषरूपे गोलके उपघाते इत्यर्थः। तदवच्छेदेन चक्षुरभावा-दिति।—वहिरवच्छेदेन तत्र चक्षुरभावस्यैव कल्पनादिति भावः। तादृशकल्पनायां मानाभावे त्वाह, यदि चेति।—वस्तुतः फलाभावेन तत्र वहिरवच्छेदेन चक्षुरभावकल्पनसम्भवाद् यदि चेत्युक्तम्। तद्गोलके इति।—अवच्छेदेन—वहिरवच्छेदेनेत्यर्थः। उपघातादेव—तादृशपित्तादिरूपदोषादेवेत्यर्थः। उपहतगोलक वत्त्वेनेति अभेदे तृतीया, काणत्वं—काणपदार्थतावच्छेदकम्, उपहतगोलकवत्त्वाभिन्नं काणपदार्थतावच्छेदकमिति समु-दायार्थः। अक्ष्णा काण इत्यादौ अक्षिपदस्य गोलकपरतया काणपदस्य शक्यार्थपरतया (श) गोलकवृत्तिचक्षुःशून्यत्ववद्गोलक-

---

(व) अक्षणेत्यत्र तृतीयाविभक्तेर्वृत्तित्वमर्थ इत्यपि बोध्यम्।

(श) शक्यार्थपरतया—चक्षुष्मद्गोलकवत्त्वे सति वहिरवच्छेदेन चक्षुःशून्यगोलक-वत्त्वरूपशक्यार्थतात्पर्येण।

हतविशिष्टस्य वा बोधकम्, अक्षिपदञ्च यदा कदाचित् चक्षुष्मद्गोलकपरम्, एवञ्च तादृशगोलकवृत्ति यत् चक्षुःशून्यत्वम् (ष) उपघातो वा तद्विशिष्टवानिति अक्ष्णा काण इति वाक्यार्थः। एवं खञ्जत्वं तथाविधसंस्थानशून्यपदवत्त्वं, पादेनेत्यादिसमभिव्याहारस्थले च तादृशसंस्थानशून्यवानेव खञ्ज-

वानित्येव बोधो जायते, तत्राधिकविषयताकल्पनविद्वेषात् (स) काणपदस्य लक्षणया चक्षुःशून्यत्वविशिष्टवत्परताम्, अक्षिपदस्य चक्षुष्मद्गोलकपरताञ्चाह,—अक्ष्णेतीति। बोधकमिति।—लक्षणया बोधकमित्यर्थः। तादृशगोलकेति।—चक्षुष्मद्गोलकेत्यर्थः। न चान्यपुरुषीयचक्षुष्मद्गोलकवृत्ति यच्चक्षुःशून्यत्वं तद्विशिष्टहस्तादिमति काणभिन्ने तथा व्यवहारापत्तिरिति वाच्यं, चक्षुःशून्यत्वे तादृशगोलकवृत्तित्वं नोपलक्षणविधया विवक्षितम्, अपि तु विशेषणविधया, तथाच चक्षुष्मद्गोलकवृत्तित्वविशिष्टचक्षुःशून्यत्ववत्त्वं तादृशगोलकस्यैव, न तु हस्तादेरित्यतिप्रसङ्गाभावात्। इदमत्रावधेयं यत्पुरुषीयैकगोलकस्य कदाचिदपि चक्षुष्मत्त्वं तत्र तादृशव्यवहारस्य सर्वानुभवसिद्धतया तादृशव्यवहारानुपपत्तिरिति स्वातन्त्र्येण (ह) काणपदार्थगर्भे चक्षु-

(ष) यत् चक्षुःशून्यत्वं— वह्रिरवच्छेदेन यत् चक्षुःशून्यत्वम्।

(स) गोलकविषयताया द्विधा प्रवेशात् शक्यार्थबोधेऽधिकविषयताकल्पनं तत्र विद्वेषादित्यर्थः।

(ह) स्वातन्त्र्येण—अक्षिपदस्य चक्षुष्मद्गोलकरूपलक्ष्यार्थवह्रिर्भावेण, तथाच चक्षुष्मद्गोलकवत्त्वे सति वह्रिरवच्छेदेन चक्षुःशून्यत्वविशिष्टवत्त्वमिति काणपदस्य लक्ष्यार्थः बोध्यः।

पदार्थः, तथाच पादवृत्ति यत् तथाविधसंस्थान-शून्यत्वं तद्विशिष्टवानित्यर्थः। त्रिलोचन इत्यस्य बहुव्रीहिणा लोचनत्रयवानित्यर्थः, तथाच मुखवृत्ति-लोचनत्रयविशिष्टवानिति मुखेन त्रिलोचन इति वाक्यार्थः, एवमन्यत्राप्यूह्यम्। अक्ष्णा काण इत्यादौ पूर्वनिरुक्ता एव पदार्थाः, तृतीया चाभेदे, तथाच तादृशगोलकाभिन्नं यच्चक्षुःशून्यमुपहतं वा तद्वानित्यर्थः। मुखेन त्रिलोचन इत्यत्र त्रिलोचनपदं लोचनत्रयविशिष्टत्वपरं, तथाच मुखाभिन्नलोचन-त्रयविशिष्टवानिति वाक्यार्थः, एवं पादेन खञ्ज इत्यादावपि स्वयमूहनीयमिति कश्चित् ॥२७॥

---

षड्गोलकवतो निवेश आवश्यकः। जातप्रसवान्धस्य तादृश-व्यवहाराविषयत्वे क्षतिविरहात्, अक्षिपदं वा गोलकमात्रपर-मिति। तथाविधेति।—साहजिकेत्यर्थः। मुखवृत्तीति।—समा-सैकदेशीभूतलोचनत्रयान्वितं प्रतियोगिपदत्वादिति ध्येयम्। अन्यत्र—पृष्ठेन कुब्ज इत्यादौ। मतान्तरमुपन्यस्यति—अक्ष्णेति। पूर्व्वमताद्वैलक्षण्यमाह—तृतीयेति। तादृशगोलकेति।—चक्षु-षड्गोलकेत्यर्थः। मुखेन त्रिलोचन इति।—अत्र त्रिलोचनपदस्य लोचनत्रयवत्त्वेन पुरुषपरत्वे तत्र मुखाभेदस्य बाधापत्ति-रतो बहुव्रीह्युत्तरम् अर्श-आदित्वादच्प्रत्ययं स्वीकृत्य लोचन-त्रयविशिष्टत्वपरत्वम्, आह मुखेन त्रिलोचन इत्येतेति।

धनेन कुलं विद्यया यश इत्यादौ तृतीया हेतुत्वे, "कर्त्तृकरणयोस्तृतीया" (२।३।१८ पा०) इत्यत्र क्रियासाकाङ्क्षतया निरुक्तकरणत्वे तृतीया, अत्र तु नामार्थेनापि साकाङ्क्षतया हेतुत्वसामान्ये "हेतौ"(२।३।२३ पा०)इति सूत्रेण (क) तृतीया विहितेति भेदः ।

---

एवं पादेन खञ्ज इत्यादावपि प्रत्यय ऊहनीय इति पाठः कस्यचिन्मतान्तर्गतः क्वचित् पुस्तके दृश्यते । अत्र प्रत्यय इति पदाभिन्नं सहजसंस्थानशून्यं तद्वानित्यादिप्रत्यय (ख) इत्यर्थः । कश्चिदित्यनेनास्वरसः सूचितः, स च तादृशबोधस्यानुभवेना स्पर्शः, लोचनत्रयविशिष्टवतस्त्रिलोचनपदार्थस्य एकदेशेऽभेदान्वयस्य ऋद्धस्य राजमातङ्गा इत्यत्रेवाव्युत्पन्नत्वं, त्रिलोचनपदार्थगर्भे अधिकपदार्थप्रवेशेन गौरवं वाऽस्वरसः कश्चिदित्युक्त्या सूचित इत्यपि कश्चित्, तच्चिन्त्यम् ॥ २७ ॥

हेतुत्वे इति ।—ननु हेतुत्वार्थकतृतीयाविधायकं हेताविति सूत्रं व्यर्थं, कर्त्तृकरणयोस्तृतीयेति सूत्रेण करणत्वरूपहेतुत्वे एव तृतीयासम्भवादित्यत आह,—कर्त्तृकरणयोरिति । निरुक्तकरणत्वे

---

(क) क्रियासाकाङ्क्षतया—क्रियामात्रनिरूपिततया, निरुक्तकरणत्वे—व्यापारवद्वृत्तिकारणत्वरूपकरणत्वे, तादृशकरणतायामेव कर्त्तृकरणयोस्तृतीयेति सूत्रेण तृतीया भवति । हेताविति सूत्रस्यायमर्थः,—यत्र द्रव्यगुणक्रियारूपनामार्थनिरूपितं निर्व्यापार-सव्यापारवृत्ति च हेतुत्वं, तत्र तादृशहेतुतायामेव तृतीया भवति, इत्थञ्च कर्त्तृकरणयोरिति विशेषसूत्रं, हेताविति सामान्यं सूत्रं बोध्यम् ।

(ख) प्रत्ययः,—प्रतीतिः, शाब्दबोध इति यावत् ।

पुत्रेण सहागत इत्यादौ तृतीयायाः कर्त्तृत्व-मर्थः, समभिव्याहृतक्रियैव सहशब्दार्थः, अस्य वर्त्तमानादिरूपैकदेशावच्छेदेन एककालीनत्वसम्बन्धेन समभिव्याहृतक्रियायामन्वयः, तृतीयार्थस्य च सहार्थक्रियायामन्वयः, एवञ्च पुत्रकर्त्तृकागमन-समानकालीनागमनकर्त्त्रैत्यन्वयबोधः । एवं पुत्रेण

---

—व्यापारवत्कारणत्वादिरूपे । नामार्थेनापीति ।—अपिना क्रियासाकाङ्क्षत्वपरिग्रहः, तथाच यत्र नामार्थसाकाङ्क्षत्वं, कारकस्य क्रियासाकाङ्क्षतया तत्र कर्त्तृकरणयोरिति सूत्राविषयतया न हेताविति सूत्रवैयर्थ्यं सामान्यविशेषभेदादिति भावः (ग) ।

क्रिया—गमनादिरित्यर्थः, समभिव्याहृतेति ।—सहशब्दसम-भिव्याहृतेत्यर्थः । क्रिया—गमनादिरूपेत्यर्थः । तृतीयार्थस्य—कर्त्तृत्वस्येत्यर्थः । अथ तृतीयार्थकर्त्तृत्वस्य क्रियासाकाङ्क्षतया कथं नामार्थान्वयसम्भव (घ) इति चेत्, पञ्चम्यर्थावधित्वस्यापि क्रिया-साकाङ्क्षतया अयमस्मात् दीर्घ इत्यादौ कथं नामार्थान्वयसम्भवः ? तत्र व्युत्पत्तिवैचित्र्येण नामार्थान्वयस्वीकारेऽत्रापि तथेत्यवधेयम् ।

---

(ग) क्रियासाकाङ्क्षतया—क्रियासाकाङ्क्षत्वनियमेन । सामान्यविशेषभेदादिति ।—तथाच न हि विशेषविधिना सामान्यविधेरन्यथासिद्धिर्भवतीति नियमेन हेताविति सूत्र-वैयर्थ्यमिति भावः ।

(घ) नामार्थान्वयसम्भव इति ।—तथाहि समभिव्याहृतक्रियायाः सहशब्दस्यार्थत्वेन सहशब्दस्य च नामत्वेन कर्त्तृत्वस्य नामार्थान्वयशङ्का बोध्या ।

सह भुङ्क्ते इत्यादावप्यूह्यम् । (ङ) वस्तुतस्तु सहशब्दस्यापेक्षाबुद्धिविशेषविषयत्वादिरूपं साहित्यमर्थः, तृतीयार्थो वृत्तित्वं संख्यामात्रं वा, सहशब्दार्थस्य सम्बन्धः प्रथमान्तार्थेनेव तृतीयान्तार्थेनापि समं वाक्यार्थः, (च) निपातातिरिक्त-

ऊह्यमिति ।--पुत्रकर्त्तृकभोजनकालीनभोजनवानित्याकारकस्तत्र बोधः । वक्ष्यमाणदोषादाह—वस्तुतस्त्विति । अपेक्षाबुद्धीति ।—पितापुत्त्रावित्याद्याकारकबुद्धिविषयत्वरूपसाहित्यमित्यर्थः, रूपेण सह घटं पश्यतीत्याद्यनुरोधेन संख्यामुपेक्ष्य अपेक्षाबुद्धिविशेषविषयत्वपर्य्यन्तानुधावनम् ; लाघवादाह— संख्येति । ननु संख्यामात्रस्य तृतीतार्थत्वे तस्य प्रकृत्यर्थविशेषणतयैव भानात् तृतीया प्रकृत्यर्थस्य सहशब्दार्थे भाने आधेयतायाः संसर्गतया भानमुपेयं, स च कस्य प्रतिपाद्य? इत्यत आह—सहशब्दार्थस्य सम्बन्ध इति । वाक्यार्थ इति ।—वाक्यप्रतिपाद्य इत्यर्थः, तथाच तादृशवाक्याकाङ्क्षाज्ञानकार्य्यतावच्छेदकतयैव तादृशसम्बन्धभानमिति भावः । ननु नामार्थयोर्भेदान्वये विभक्त्यर्थद्वारताया अपेक्षितत्वात् कथं तां विना नामार्थयोर्भेदान्वय इत्यत आह, निपातातिरिक्तेति ।—तथाच सहशब्दस्य निपाततया विभक्त्यर्थद्वारतां विनैव नामार्थयो-

(ङ) अत्रेदं बोध्यम् ;—तृतीयार्थकर्त्तृत्वस्य नामार्थे एवान्वयेन न सहयोगे तृतीयाविधानवैयर्थ्यं, कर्त्तृकरणयोस्तृतीयेति सूत्रेण क्रियान्वयिकर्त्तृत्वादावेव तृतीयाविधानात्, अत्र तु न तद्विषय इति ।

(च) प्रथमान्तस्थले यथा आश्रयत्वस्य संसर्गतया आकाङ्क्षालभ्यत्वं, तथा तृतीयान्तस्थलेऽपि वृत्तित्वस्य संसर्गतया आकाङ्क्षालभ्यत्वमिति भावः । वाक्यार्थः,—संसर्गतया आकाङ्क्षालभ्यः ।

**नामार्थयोरेव भेदान्वयस्य विभक्त्यर्थगर्भत्वात्, साहित्यावच्छेदेन सर्वत्र विधेयस्यान्वयः, एवञ्च पुत्रेण सहागतश्चैत्र इत्यत्र पुत्रवृत्तिसाहित्याव-**

भेदान्वयो न व्युत्पत्तिविरोधमासादयतीति भावः। विभक्त्यर्थगर्भत्वात्—विभक्त्यर्थं द्वारीकृत्य व्युत्पन्नत्वादित्यर्थः। ननु पुत्रेण सहागतश्चैत्र इत्यादौ पुत्रचैत्रोभयस्मिन्नेव गमनकर्त्तृत्वप्रतीतेरानुभविकतया तदनुपपत्तिरित्यत आह, साहित्यावच्छेदेनेति।—अवच्छेदकत्वमत्रानतिरिक्तवृत्तित्वम्। प्रकृतेऽन्वयबोधं दर्शयति—एवञ्चेत्यादिना। पुत्रवृत्तीति।—आधेयतासम्बन्धेन पुत्रविशिष्टेत्यर्थः। इदमत्रालोचनीयं,—पुत्रेण सहागतश्चैत्र इत्यादौ तादृशसाहित्येऽनतिरिक्तवृत्तित्वरूपावच्छेदत्वस्य स्वव्यापकतत्कर्त्तृत्वस्य वा न प्रकारतया तादृशबोधे भानसम्भवः, तस्य तादृशवाक्यघटकपदार्थत्वाभावात्,(क) किन्तु स्वव्यापकतावच्छेदकगमनकृतित्वावच्छिन्नप्रतियोगिकसमवायेनैव विधेयभानं (ज) तत्रोपगन्तव्यम्। एवञ्च तदभ्युपगमे तादृशस्थले न क्षतिः, व्युत्पत्तिवैचित्र्यात्। पुत्रवृत्तिसाहित्यावच्छेदेनागमनकर्त्तृत्वबोधे पुत्रेऽप्युत्तरकालम् आगमनकर्त्तृत्वबोधो मानसात्मकः सम्भवतीति। न च पुत्र-

(क) तादृशवाक्यं—पुत्रेण सहागतश्चैत्र इत्यादिवाक्यं, तद्घटकं यत् पुत्रादिपदं तदर्थत्वाभावादित्यर्थः। तथाहि अपदार्थस्य शाब्दबोधे प्रकारतया भानानियमान्न तादृशावच्छेदकत्वस्य शाब्दबोधे प्रकारतया भानसम्भव इति भावः।

(ज) स्वव्यापकेत्यत्र स्वपदेन साहित्यं बोध्यम्; विधेयभानमित्यत्र विधेयपदेनात्रागमनकृतिर्बोध्या, एवञ्च स्वव्यापकतत्कर्त्तृत्वरूपस्यागमनकर्त्तृत्वावच्छेदकत्वस्यापि घटकेन स्वपदेन साहित्यं, तत्पदेन कर्त्तृत्वं कृतिर्वा बोध्यम्।

च्छिन्नस्यैव आगमनकर्त्ता इत्यन्वयबोधः, तेन शिष्येण सह उपाध्यायो ब्राह्मणः, सपुस्तकः सुन्दर इत्यादौ द्रव्यगुणादिविधेयस्थलेऽप्यन्वयः ।

---

वृत्तिसाहित्यस्य तादृशबुद्धिविषयतारूपस्य विषयभेदेन भिन्नस्य चैत्रे बाधात् न तादृशप्रयोगः साधुरिति वाच्यं, विषयतासम्बन्धेन तादृशबुद्धेरेव साहित्यरूपत्वात् । न च तथापि विषयतासम्बन्धेन तादृशसाहित्यस्य चैत्रत्वपुत्रत्वादावपि सत्त्वेन तत्रागमनकर्त्तृत्वादिरूपविधेयासत्त्वेन तादृशसाहित्यव्यापकत्वभानानुपपत्तिरिति वाच्यं, तत्तन्निष्ठविषयताभिन्नविषयतासम्बन्धस्यैव व्याप्यताघटकसम्बन्धत्वोपगमात् (झ) तथैव साकाङ्क्षत्वाच्चेति । पूर्वकल्पपरित्यागे वीजं दर्शयति, तेनेति ।--वस्तुतस्तु कल्पानुसरणेनेति तदर्थः । शिष्येण सह उपाध्यायो ब्राह्मण इत्यादौ शिष्येण सह उपाध्यायः सुन्दर इत्यादौ चेत्यर्थः । द्रव्यगुणादीति ।—तत्र समभिव्याहृतक्रियाया अभावेन पूर्व्वकल्पे सहार्थान्वयासम्भवादिति भावः । (ञ) अन्वय इति ।—अस्मद्दर्शनरीत्या शाब्दबोधे तात्पर्य्यं बोध्यम् ।

---

(झ) तत्तन्निष्ठविषयताभिन्नेति ।—चैत्रत्व-पुत्रत्वनिष्ठविषयताभिन्नेत्यर्थः, तथाच चैत्रपुत्रौ इत्याकारकापेक्षाबुद्धिरूपसाहित्यस्य विषयतासम्बन्धेन चैत्रत्वपुत्रत्वयोः सत्त्वेऽपि चैत्रत्वपुत्रत्वनिष्ठविषयताभिन्नविषयतासम्बन्धेन चैत्रपुत्रयोरेव सत्त्वेन तत्र तादृशसमवायसम्बन्धेन कृतिरूपविधेयसत्त्वान्न क्षतिः । अत्रेदं बोध्यं,—स्वव्यापकतत्कर्त्तृत्वेत्यत्र व्यापकतावच्छेदकसम्बन्धस्तादृशसमवायः व्याप्यतावच्छेदकसम्बन्धश्च तत्तन्निष्ठविषयताभिन्नविषयत्वम् ।

(ञ) पूर्व्वकल्पे समभिव्याहृतक्रियाया एव सहशब्दार्थत्वोपगमादिति वीजम् ।

सहैव दशभिः पुत्रैर्भारं वहति गर्दभीत्यत्र (ट) पुत्रेषु भारवहनकर्त्तृत्वाबोधेऽपि तादृशप्रयोगादेकदेशविद्यमानेत्यध्याहारेण एकदेशविद्यमानतायामुक्तसाहित्यस्यावच्छेदकतयाऽन्वयः दशपुत्रवृत्तिसाहित्यावच्छिन्नैकदेशविद्यमानत्ववती गर्दभी भारवहनानुकूलकृतिमतीत्यन्वयबोधः, अत एव विद्यमानसहार्थे तृतीयेति शाब्दिका वदन्ति ।

धान्येन धनी, गोत्रेण गार्ग्यः, प्रकृत्याऽभिरूप इत्यादौ प्रकृत्यादिभ्यश्चेत्यनेन तृतीयाऽभेदे, धान्याभिन्नधनवानित्यन्वयधीः । गार्ग्यो गर्गकुलोत्पन्नः, तथाच गोत्राभिन्नगर्गकुलोत्पन्न इत्यन्वयधीः । प्रकृतिपदस्य साहजिकोऽभिरूपपदस्य रमणीयतावान् अर्थः, तथाच साहजिकाभिन्नरमणीयतावानित्यन्वयः ॥२८॥

अत एव एकदेशे विद्यमानेत्यध्याहारेणैव तत्र शाब्दबोधादेवेत्यर्थः । विद्यमानसहार्थे—विद्यमानत्वान्वयिसहार्थे इत्यर्थः ।

गोत्रेणेति ।—गोत्रम्—आदिपुरुषः, गर्गः,—मुनिविशेषः । साहजिक इति ।—अर्थ इति परेणान्वयः, साहजिकत्वं—जन्य-

(ट) दशपुत्रेषु भारवहनकर्त्तृत्वाभावेन सहैव दशभिः पुत्रैर्भारं वहति गर्दभीत्यादिप्रयोगानुपपत्तिरित्यत आह, सहैवेति ।—तथाच एकदेशविद्यमानत्वस्य दशपुत्रेषु गर्दभ्यामपि सत्त्वेन तत्र साहित्यान्वयोपगमान्न क्षतिरिति भावः ।

"कर्म्मणा यमभिप्रैति स सम्प्रदानम्" ( १।४।३२ पा० ) इति सूत्रं तत्क्रियाकारणीभूतेन तत्क्रियाकर्मणा यं सम्बन्धीकर्तुमभिप्रैति कर्त्ता स सम्प्रदानमिति सूत्रार्थः, एवञ्च तत्क्रियाकारणीभूतकर्म्मजन्यफलभागित्वेन उद्देश्यत्वं सम्प्रदानत्व-

---

कृत्यजन्यत्वं, रमणीयता—सुखजनकदर्शनविषयरूपादिमत्ता। प्रकृत्या कृपण इत्यादौ प्रकृतिपदं स्वाधिकरणयावत्कालवृत्ति-धर्म्मपरं, तथाच स्वाधिकरण-यावत्कालवृत्ति-धर्माभिन्न-कार्पण्य-वानित्यन्वयबोधः। जात्या ब्राह्मण इत्यत्र ब्राह्मणपदं लक्षणयाऽदृष्टविशेषप्रयोज्यधर्म्मवत्परं, तथाच जात्यभिन्नो योऽदृष्ट-विशेषप्रयोज्यधर्म्मस्तद्वानित्यर्थः, ब्राह्मणत्वजात्यवच्छिन्नपरत्वेऽन्वयितावच्छेदकानुपस्थित्या तत्र जात्यभेदान्वयानुपपत्तिः (ठ) इत्यधिकमन्यत्रानुसन्धेयम् ॥२८॥

सम्प्रदानं लक्षयति—कर्म्मणेति। लक्षणातिव्याप्तिवारणाय कर्म्मपदं विशेषयति—तत्क्रियेति। सम्बन्धीकर्त्तुमभिप्रैति—फलभागित्वेनेच्छोद्देश्यीकरोति। सम्प्रदानमिति—तत्क्रियासम्प्रदानमित्यर्थः। इच्छानिवेशे कर्त्तृनिवेशे च प्रयोजनाभावान्निष्कृष्टार्थमाह—एवञ्चेति। तत्क्रियाकारणीभूतेत्यस्य फल-

---

(ठ) तथाहि, जात्या ब्राह्मण इति प्रयोगे ब्राह्मणत्वजातेरनुल्लेखितत्वेनानुल्लिख्यमानजातेः स्वरूपतो भाननियमात् तत्र ब्राह्मणत्वजातेर्निरवच्छिन्नतयैव भानं, न तु ब्राह्मणत्वत्वेनेति। अन्वयितावच्छेदकावच्छेदेनैवान्वयनियमात् तत्रान्वयितावच्छेदकस्य ब्राह्मणत्वत्व[illegible] ब्राह्मणत्वे जात्यभेदान्वयो न सम्भवतीति भावः।

मिति पर्य्यवसितं, ग्रामं गच्छतीत्यत्र गमनकर्म्म-ग्रामजन्यफलसुखादिभागित्वेनोद्देश्यस्य चैत्रादे-स्तत्क्रियायां सम्प्रदानत्वाभावात् तद्वारणाय कारणीभूतेति, तत्र गमने ग्रामस्य कारणत्वाभावात्, दानादौ देयादेः कारणत्वमतो लक्षणसमन्वयः । विप्राय गां ददातीत्यादौ जन्यफलप्रकारकेच्छा-

माह,—ग्राममित्यादि । तद्वारणायेति ।—चैत्रो गमनक्रिया-सम्प्रदानमिति व्यवहारवारणायेत्यर्थः । काष्ठैः स्थाल्यामोदनं पचतीत्यादौ पाकक्रियाकारणजन्यविक्लित्त्यादिफलभागित्वेनौ-दनादेरुद्देश्यत्वात् तद्वारणाय कर्म्मेति बोध्यम् । तत्र गमने—गच्छतीत्यादिबोध्ये गमने इत्यर्थः । कारणत्वाभावादिति ।—गमनैकदेशे संयोगे ग्रामस्य कारणत्वेऽपि गमने (ड) कारणत्वाभावादिति भावः । दानादाविति ।—आदिपदात् सेकादि-परिग्रहः । देयादेरिति ।—आदिना उदकादिपरिग्रहः । दानैकदेशे स्वत्वे पूर्वस्वत्वध्वंसद्वारा गवादेर्हेतुत्वात् स्वत्वध्वंसेऽपि स्वत्वद्वारा हेतुत्वाच्च गवादेर्दानकरणत्वमिति भावः । स्वत्वज्ञान-द्वारा देयस्य गवादेरिच्छां प्रत्येव (ढ) प्रयोजकत्वमिति केचित् ।

(ड) संयोगजनकस्पन्दनरूपगमने इत्यर्थः, तथाहि स्वसमवेतसामान्यं प्रति स्वस्य कारणतया संयोगं प्रति तदधिकरणस्य ग्रामस्य कारणत्वेऽपि निरुक्तस्पन्दनात्मकगमनस्य ग्रामेऽसत्त्वेन कारणत्वासम्भवादिति भावः ।

(ढ) इच्छां प्रत्येवेति ।—तथाहि [illegible]

पूर्वकत्वं चतुर्थ्यर्थः, व्युत्पत्तिवैचित्र्याच्च तदेकदेशे इच्छायां विषयतया प्रकृत्यर्थान्वयः, तदेकदेशे जन्यत्वे कर्म्मणो गवादेश्च निरूपकतासम्बन्धेनान्वयः, स्वस्वत्वध्वंसपूर्वकपरस्वत्वोत्पत्त्यवच्छिन्नत्यागो ददातेरर्थः, कृतिश्चाख्यातार्थः, एवञ्च विप्रविषयकगोजन्य--फलप्रकारेच्छापूर्वकगोवृत्ति-स्वस्वत्वध्वंसपूर्वकपरस्वत्वोत्पत्त्यवच्छिन्नत्यागानुकूल-कृतिमानित्यन्वयधीः। पितृस्वर्गमुद्दिश्य कृते च गोदाने दानजन्यफलभागित्वेन पितोद्देश्यो न तु गोजन्यफलभागित्वेनेति पित्रादेर्न सम्प्रदानत्वं,

---

इच्छापूर्व्वकत्वम्—इच्छाप्रयोज्यत्वम्, इदञ्च [illegible]त्व[illegible]तावच्छेदक-परस्वत्वान्वयि। विषयतया—उद्देश्यतया, प्रकृत्यर्थः,—विप्रादिः। अथैवं चैत्रस्यैत्राय ग्रामं गच्छतीत्यादेरपि प्रयोगापत्तिः तत्र चैत्रोद्देश्यकग्रामजन्यफल-प्रकारकेच्छा-प्रयोज्यग्रामनिष्ठसंयोगावच्छिन्नक्रियावान् चैत्र इत्यन्वये बाधकाभावादिति चेन्न, चतुर्थ्यर्थ-घटकजन्यत्वं न जन्यतामात्रं, किन्तु करणतानिरूपितजन्यत्व-मिति धात्वर्थघटकसंयोगे ग्रामनिष्ठकरणतानिरूपकजन्यत्वस्य बाधेन तादृशान्वयाभावात्। पितृस्वर्गमुद्दिश्य कृते गोदाने-

---

भवत्वित्याद्याकारकः, एवञ्च स्वस्वत्वध्वंसपूर्व्वकपरस्वत्वोत्पत्त्यनुकूलत्यागरूपदानक्रियाया-स्तादृशेच्छारूपतया तादृशेच्छां प्रत्येव गवादेः प्रयोजकत्वमुक्तमिति भावः।

यदि च दत्ता गौः पितुः स्वर्गमुत्पादयिष्यतीत्यभिसन्धिस्तदाऽदृष्टाद्वारक-तादृशकर्म्मजन्यत्वं वाच्यम् । केचित्तु धात्वर्थतावच्छेदकत्वेन फलं विशिष्यं, (ण) निरूपितत्वेनेच्छाविषयत्वं चतुर्थ्यर्थः, स च धात्वर्थतावच्छेदके फलेऽन्वेति, एवञ्च विप्रनिरूपितत्वेनेच्छाविषयगोवृत्तिस्वस्वत्वध्वंसपूर्वकपरस्वत्वोत्पत्त्यवच्छिन्नत्यागानुकूलकृतिमानित्यन्वयधीः, (त)

पितुः सम्प्रदानत्वापत्तिरत आह—पितुः स्वर्गमिति । अभिसन्धिः,—इच्छा । अदृष्टाद्वारकेति ।—प्रकृते तु स्वजन्यदानजन्यादृष्टद्वारकमेव दानकर्म्मगवादिजन्यत्वम् ; पित्रादेः सम्प्रदानत्वव्युदासः, एवं चतुर्थ्यर्थजन्यत्वमप्यदृष्टाद्वारकं ग्राह्यं, तेन तत्र पित्रे गां ददातीत्यादिप्रयोगस्य नापत्तिः । फलं—लक्षणघटकफलं, तथाच धात्वर्थकारणीभूतकर्म्मजन्यतद्धात्वर्थतावच्छेदकफलभागित्वेनोद्देश्यत्वं सम्प्रदानत्वमिति भावः. अत्र धात्वर्थतावच्छेदकत्वम् अवच्छेदकतावच्छेदकसाधारणं, तेन वृक्षायोदकमासिञ्चतीत्यादौ धात्वर्थतावच्छेदकतावच्छेदकसंयोगवत्त्वेनोद्देश्यत्वेऽपि न वृक्षादेः सम्प्रदानत्वहानिः, प्रकृते च स्वर्गो न धात्वर्थतावच्छेदक इति नातिप्रसङ्गः पित्रादाविति भावः । एवञ्चेति ।—विप्रनिरूपितत्वेनेच्छाविषयः यद्गावृत्तिस्वत्वध्वंसपूर्वकपरस्वत्वं

(ण) विशिष्यं—विशेषणीयं, तथाच लक्षणघटकफले धात्वर्थतावच्छेदकं विशेषणं बोध्यम् ।

(त) इयं गौर्विप्रस्य भवत्वित्याकारकेच्छायां विप्रनिरूपितस्वत्वं गवि भासते इति विप्रनिरूपितत्वेनेच्छाविषयत्वं [illegible] बोध्यम् ।

जन्यस्वत्वस्य गोवृत्तित्वे लब्धे अर्थात्तज्जन्यत्वमपि लभ्यते एवेति तादृशगोजन्यस्वस्वत्वनिरूपकत्वेनोद्देश्यत्वं विप्रस्याख्यातम्।

एवञ्च वृक्षायोदकमासिञ्चतीत्यादौ संयोगावच्छिन्नद्रवद्रव्यक्रियावच्छिन्नव्यापारो धात्वर्थः, वृत्तित्वेनेच्छाविषयत्वं चतुर्थ्यर्थः, (थ) स च धात्वर्थतावच्छेदकतावच्छेदकसंयोगान्वयी, वृत्तित्वं द्वितीयार्थः

---

तदवच्छिन्नत्यागानुकूलकृतिमानित्यन्वयबोधः। नन्वेवं विप्राय गां ददातीत्यादिप्रयोगस्य विप्रसम्प्रदानत्वबोधकत्वमनुभवसिद्धं तच्चैतन्मते नोपपद्यते (द) शाब्दबोधे स्वत्वे गोवृत्तित्वस्यैव भानादित्यत आह—जन्यस्वत्वस्येति। अर्थादिति।—त[illegible]च तत्समवेतजन्यस्वत्वस्य तज्जन्यत्वनियमात् तादृशशब्दानन्तरं मानस एव सम्प्रदानत्वबोध इति भावः।

एवञ्चेति।—तादृशलक्षणकरणे चेत्यर्थः। वृक्षायेति।—

---

(थ) व्यापारः,—नोदनादिः। वृत्तित्वेनेच्छाविषयत्वमिति।—न च वृत्तित्वमात्रं चतुर्थ्यर्थः सम्भवति, अन्योद्देशेन क्षिप्तजलस्य दैवाद् यत्र वृक्षसंयोगस्तत्र वृक्षायोदकमासिञ्चतीति प्रयोगापत्तेस्तथाच तत्र संयोगस्य वृक्षवृत्तित्वेनेच्छाविषयत्वाभावान्न तत्र तदापत्तिरिति।

(द) नोपपद्यते इति।—परस्वत्वरूपफले दानकर्म्म गोजन्यत्वाप्राप्तौ विप्रस्य कर्म्मजन्यफलभागित्वेनोद्देश्यत्वाप्राप्त्या सम्प्रदानत्वानुपपत्तिरिति भावः।

तादृशद्रवद्रव्यक्रियायामन्वेति, एवञ्च वृक्षवृत्तित्वेनेच्छाविषय-संयोगावच्छिन्न-जलवृत्ति-द्रवद्रव्यक्रियावच्छिन्नव्यापारानुकूलकृतिमानित्यन्वयबोधः। न चैवं सिचधात्वर्थतावच्छेदकद्रवद्रव्यक्रियायां द्वितीयार्थवृत्तित्वान्वये पयसा वृक्षमासिञ्चतीति प्रयोगो न स्यात्, तादृशक्रियाया वृक्षवृत्तित्वाभावादिति वाच्यं, (ध) तत्र संयोगावच्छिन्नद्रवद्रव्यक्रियाया एव धात्वर्थतया तदवच्छेदकीभूतसंयोगे वृत्तित्वान्वयात्। द्रवद्रव्यसंयोग एव तत्र धात्वर्थ इति तु न युक्तं, तथा सति फलावच्छिन्नव्यापाराबोधकत्वेन धातोरकर्मकत्वेन धात्वर्थतावच्छेदक-

अत्रापि सम्प्रदानत्वं मुख्यमेवेति भावः। एवञ्चेति।—वृक्षवृत्तित्वेनेच्छाविषयो यः संयोगस्तदनुकूला या उदकवृत्तिर्द्रवद्रव्यवृत्तिक्रिया तदनुकूलव्यापारा-(न)-नुकूलकृतिमानित्यन्वयधीरित्यर्थः। तादृशक्रियाया इति।—संयोगावच्छिन्नद्रवद्रव्यक्रियाया इत्यर्थः, तत्र—पयसा वृक्षमासिञ्चतीत्यादौ। तदवच्छेदकीभूतेति।—धात्वर्थतावच्छेदकीभूतेत्यर्थः। प्राचीनमतं दूषयति, तत्रेति।—पयसा वृक्षमासिञ्चतीत्यादावित्यर्थः।

(ध) संयोगानुकूलद्रवद्रव्यक्रियाया जलवृत्तित्वेन वृक्षवृत्तित्वाभावात् वृक्षे तादृशक्रिया जन्यसंयोगस्यैव सत्त्वादिति भावः।

(न) क्रिया—सेकादिः, व्यापारः,—नोदनादिः।

फलशालित्वाभावेन वृक्षादेरकर्म्मत्वापत्तेः, अत एव अजां ग्रामं नयतीतिवत् न द्विकर्मत्वं, संयोगावच्छिन्नद्रवद्रव्यक्रियार्थकत्वे तदवच्छेदकफलद्वयाभावात्। (प)तादृशक्रियावच्छिन्नव्यापारस्य धात्वर्थत्वे च तादृशक्रियायामेव द्वितीयार्थवृत्तित्वान्वयात् तत्क्रियावच्छेदकसंयोगे च चतुर्थ्यर्थस्योद्देश्यत्वस्यैवान्वयात्, (फ) फलबलेन तथैव व्युत्पत्तिकल्पनात् । न चैवमजां नयति ग्राममित्यत्रापि ग्रामस्य

अत एव—वक्ष्यमाणयुक्तेरेव । ननु तादृशक्रियावच्छिन्नव्यापारार्थकत्वे द्विकर्म्मकत्वं दुर्वारम्, (ब) अत आह— तादृशक्रियेति। एवमिति ।—तत्तत्क्रियाकारणीभूत-कर्मजन्य-फलभागित्वेनोद्दे-

(प) अयमभिप्रायः,—उत्तरदेशसंयोगानुकूलव्यापाररूपप्रापणं नीधातोरर्थः, तत्र च धात्वर्थतावच्छेदकं संयोगः क्रिया चेति फलद्वयम् ; एवञ्च अजां ग्रामं नयतीत्यादौ द्वितीयाद्वयस्य वृत्तित्वमर्थः, तत्र संयोगरूपफले ग्रामवृत्तित्वस्य, क्रियारूपफले च अजावृत्तित्वस्यान्वय इति तत्र धात्वर्थतावच्छेदकस्य फलद्वयघटितत्वेन द्विकर्म्मकत्वं, प्रकृते तु सिचधात्वर्थस्य संयोगानुकूलद्रवद्रव्यक्रियार्थकत्वे सिचधात्वर्थतावच्छेदकस्य संयोगरूपैकफलघटितत्वेन फलद्वयघटितत्वाभावान्न पयसा वृक्षं सिञ्चतीत्यादौ पयसोऽपि कर्म्मतापत्त्या सिचधातोर्द्विकर्म्मकत्वापत्तिरिति ।

(फ) उद्देश्यत्वस्यैवेत्येवकारेण वृत्तित्वस्य व्यवच्छेदः, तथाच यत्र धात्वर्थतावच्छेदकफलद्वये कर्म्मद्वयवृत्तित्वस्यान्वयस्तत्रैव धातोर्द्विकर्म्मकत्वमित्यभ्युपगमः, व्युत्पत्तिस्तु तादृश्येव कल्पनीयेति भावः ।

(ब) दुर्वारमिति ।—तथाहि सिचधातोः संयोगानुकूलद्रवद्रव्यक्रियानुकूलव्यापारार्थ-

सम्प्रदानत्वापत्तिः । तथाहि संयोगजनकगमनानुकूलव्यापारो धात्वर्थः, द्वितीयाद्वयस्य वृत्तित्वमर्थः, धात्वर्थतावच्छेदकगमनैकदेशे संयोगे ग्रामपदोत्तरद्वितीयार्थस्य, गमने चाजापदोत्तरद्वितीयार्थस्य वृत्तित्वस्यान्वयः, एवञ्च ग्रामवृत्तिसंयोगजनकाजावृत्तिगमनावच्छिन्नव्यापारानुकूल-कृतिमानित्यन्वयधीः, तथा चाजाजन्यफलभागित्वेनोद्देश्यत्वेन ग्रामस्याप्रत्ययात् न सम्प्रदानता । यदा तु

---

श्यत्वस्यैव सम्प्रदानत्वे इत्यर्थः । सम्प्रदानत्वापत्तिरिति ।—ग्रामस्याजाजन्यसंयोगरूपफलभागित्वेनोद्देश्यत्वादिति भावः । न चाजां नयतीत्यादौ संयोगानुकूलक्रियावच्छिन्नव्यापारस्य धात्वर्थतयाऽजायास्तादृशक्रियाकारणत्वाभावात् कथं ग्रामस्य सम्प्रदानत्वापत्तिरिति वाच्यं, तादृशधात्वर्थतावच्छेदकतावच्छेदकसंयोगे एव क्रियाद्वारा अजायाः करणत्वेन करणत्वस्याक्षतत्वात्, एवं रीत्या पूर्वं सिचधातोः कर्मणः करणत्वं बोध्यमिति । तथाहि —उक्तापत्त्यभावं जानीहि । न सम्प्रदानतेति ।—तथाच तत्र तादृशोद्देश्यत्वबोधो न तात्पर्यविषय इति भावः । यत्र तादृशबोधस्तात्पर्यविषयस्तत्र तादृशप्रयोग इष्ट एवेत्याह—यदा

---

कत्वे धात्वर्थतावच्छेदकस्य संयोगक्रियारूपफलद्वयघटितत्वेन संयोगरूपफले वृत्त्यवृत्तित्वस्य क्रियारूपफले पर्यौवृत्तित्वस्यापत्त्या सिचधातोर्द्विकर्मकत्वं स्यादिति भावः।

तथोद्देश्यत्वं विवक्ष्यते, तदा ग्रामायाजां नयतीति प्रयोगो भवत्येवेत्याहुः। वस्तुतस्तु त्यज्यमानद्रव्यस्य स्वत्वभागित्वेनोद्देश्यत्वं सम्प्रदानत्वं त्यागविशेष-श्चात्र ग्राह्यः, तेन विक्रयादौ क्रेत्रादेर्न सम्प्रदानता (भ), श्राद्धादौ पित्रादेर्न स्वत्वभागित्वेनो-द्देश्यत्वं, किन्तु प्रीतिभागितया इत्यत एव (म)

। विवक्ष्यते—वक्तुस्तात्पर्य्यविषयो भवतीत्यर्थः। पूर्व-मते केचिच्वित्यादिमते च क्रयविक्रयादौ क्रेत्रादेः सम्प्रदान-त्वापत्तेराह—वस्तुतस्त्विति। उक्तप्रयोगा-(य)-सहिष्णुराह—वस्तु-तस्त्वितीति केचित्। त्यज्यमानेति।—देयेत्यर्थः। त्याग-विशेषः,—अनुभवसिद्धदानत्वजात्यवच्छिन्नरूप (र) इत्यर्थः। स्वत्वभागित्वेनोद्देश्यत्वं—देयद्रव्य-स्वत्वभागित्वेनोद्देश्यत्वमित्यर्थः। प्रीतिभागितया—प्रीतिभागितयैवेत्यर्थः। ननु देवतायाः स्वत्वा-

(भ) तेन—त्यज्यमानघटकत्यागस्य त्यागविशेषरूपार्थकरणेन, विक्रयादौ—मूल्य-ग्रहणप्रयुक्त-स्वस्वत्वध्वंसपूर्वकपरस्वत्वावच्छिन्नत्यागरूपविक्रयादौ, तथाच विक्रयादौ विक्रेयद्रव्ये दानत्वजात्यवच्छिन्नरूपत्यागविशेषवत्त्वविरहात् क्रेत्रादेर्न सम्प्रदानत्वमिति भावः।

(म) अत एव—मित्रादेः सम्प्रदानत्वाभावादेव, अन्यथा सम्प्रदानचतुर्थ्येवोपपत्तौ नमःस्वस्तीत्यादिसूत्रान्तरेण स्वधायोगे चतुर्थीविधानवैयर्थ्यं स्यादिति भावः।

(य) उक्तप्रयोगः,—ग्रामायाजां नयतीति प्रयोगः।

(र) अनुभवसिद्धेति।—स्वर्गविशेषजनकतावच्छेदकतया सिद्धा दानत्वजातिरिति भावः।

सम्प्रदानचतुष्टयसम्भवात् नमःस्वस्तीत्यादि सूत्रा-न्तरेण चतुर्थीविधानम् । (ल) रुद्राय गां ददा-तीत्यादौ रुद्रादेः स्वत्वभागित्वेनैवोद्देश्यत्वं, कर्म-णेत्यादिसूत्रमप्येतत्परतयैव व्याख्येयं, कर्मणा—दानकर्मणा, यमभिप्रैति—स्वत्वभागित्वेनोद्देश्यी-करोति, स सम्प्रदानमिति, एवञ्च सम्प्रदीयते-ऽस्मै इति व्युत्पत्त्या (व) सम्प्रदानसंज्ञाप्यन्वर्थैव ।

---

स्वीकारे रुद्राय गां ददातीत्यादौ रुद्रादेः सम्प्रदानत्वानुप-पत्तिरत आह—रुद्रायेति । उद्देश्यत्वमिति ।—तथाच देवतायाः स्वत्वस्वीकारे इच्छा न विसंवादिनी, तदस्वीकारे विसंवादि-नीत्युभयथैव तादृशोद्देश्यत्वानपायादिति भावः । एतत्कल्पे पूर्वोक्तकल्पे च सूत्राविरोधमुपपादयति, कर्मणेत्यादि ।—इदञ्च यागादेरपि दानत्वमभ्युपेत्य. अन्यथा यजादिधातुयोगे रुद्रादेः सम्प्रदानत्वानुपपत्तेः, तस्य दानत्वाभावात्, तदनभ्युपगमे तु दानादिकर्मणेति व्याख्येयम् । (श)एवञ्चेति ।—दानघटितलक्षण-करणे चेत्यर्थः । अन्वर्थैवेति ।—यौगिकैवेत्यर्थः । नन्वेवं दान-

---

(ल) इदं पितृभ्यो नमः, एतत्तेऽन्नं नमः, पितृभ्यः स्वधेत्यादौ चतुर्थीविधानम् ।

(व) अस्मै इति चतुर्थ्यर्थः स्वत्वभागित्वेनोद्देश्यताकत्वं, तस्य च सम्प्रदीयते इति भावे प्रत्ययेन सम्प्रदानरूपतदर्थेऽन्वयः, एवञ्च सम्प्रदानस्वत्वभागित्वेन इदंपदार्थोद्देश्य-ताकत्वे लब्धे सम्प्रदानकर्मजन्यफलभागित्वेनोद्देश्यत्वमपि इदंपदार्थे लभ्यते इत्यभिप्रायः ।

(श) यागस्य दानत्वास्वीकारे लक्षणे कर्मणेत्यस्य दानादिकर्मणेति व्याख्येयं-तथापि [illegible] यागादेरभ्युपगमो बोध्यः ।

वृक्षायोदकमासिञ्चतीत्यादौ वृक्षादौ सम्प्रदानप्रयोगा गौणश्चतुर्थीप्राप्त्यर्थः, अत एव शत्रवेऽस्त्रं मुञ्चति, मित्राय दूतं प्रेरयतीत्यादौ धात्वर्थतावच्छेदकफलोद्देश्यत्वाभावेऽपि चतुर्थीप्रयोग उपपद्यते, विभागानुकूलव्यापारो मोचनं, गमनानुकूलव्यापारः प्रेरणं, तदवच्छेदकविभागसंयोगशालित्वेन शत्रुमित्रयोरनुद्देश्यत्वात्, तथाच तत्र तत्र उदकादिजन्यफलपल्लवादि, अस्त्रजन्य-

---

घटितसम्प्रदानलक्षणकरणे वृक्षादेः सेकसम्प्रदानत्वासम्भवेन चतुर्थी न स्यादत आह —वृक्षायेति । गौणः,—क्रियाकर्म्मजन्यफलभागित्वेनोद्देश्यत्वेन लाक्षणिकः । चतुर्थीप्राप्त्यर्थ इति ।—चतुर्थ्यास्तत्र लक्षणेति भावः । लाक्षणिकचतुर्थीघटितस्थले फले अवच्छेदकतावच्छेदकसाधारणधात्वर्थतावच्छेदकत्वस्य न निवेश (ष) इत्यभिप्रायः । अत एव —धात्वर्थतावच्छेदकत्वस्य फलेऽनिवेशादेव । चतुर्थीप्रयोगः,—क्रियाकर्म्मजन्यफलभागित्वेनोद्देश्यत्वे लाक्षणिकचतुर्थीप्रयोग इत्यर्थः । तत्र फले धात्वर्थतावच्छेदकत्वनिवेशे तन्नोपपद्यते इति भावः । तत्र तत्र लाक्षणिकचतुर्थीप्रयोगमुपपादयति—विभागेत्यादिना । तत्र तत्र—

---

(ष) तन्निवेशे दोषं स्वयमेव वक्ष्यति ।

दुःखादि, दूतजन्यवार्त्ताज्ञानादिशालित्वेनोद्देश्यत्व-मेव गौणचतुर्थ्यर्थः । न चैवं गुरुप्रीतिमुद्दिश्य गुरुपुत्राय दत्ते गुरवे गां ददातीति प्रयोगः स्यात्, तथाविवक्षायामिष्टत्वात्, अत एव रजकसम्बन्धित्वं यत्र तात्पर्य्यविषयस्तत्र रजकस्य वस्त्रं ददातीति प्रयोगः स्यात्, यत्र तु वस्त्रजन्यफलभागित्वेनो-द्देश्यत्वं तात्पर्य्यविषयस्तत्र रजकाय वस्त्रं ददातीति प्रयोगो भवत्येव । न चैवं श्राद्धादावपि पित्रादेः कर्म्मजन्यप्रीतिभागितया उद्देश्यत्वात् गौणसम्प्र-दानत्वात् सम्प्रदानचतुर्थ्यैवोपपत्तेर्नमःस्वस्तीत्यादि-सूत्रान्तरं व्यर्थमिति वाच्यं, यत्किञ्चित्क्रियाकर्म्म-जन्यफलभागित्वेनोद्देश्यत्वस्यैव गौणसम्प्रदानत्वेन नमःपदादेः क्रियावाचकत्वाभावेन पृथक् सूत्रप्रण-

---

निरुक्तस्थलत्रये । क्रमेण दर्शयति—उदकादीति । एवं—धात्वर्थतावच्छेदकत्वस्य फलेऽनिवेशे । तथाविवक्षायां—गुरु-प्रीत्युद्देश्यकत्वविवक्षायाम् । अत एव—क्रियाकर्म्मजन्यफलभागि-त्वेनोद्देश्यत्वस्य तात्पर्य्यविषयत्वे लाक्षणिकचतुर्थीप्रयोगस्येष्टत्वा-देव । वस्त्रजन्यफलेति ।—फलमत्र स्वत्वादिकम् । कर्म्म-जन्येति ।—क्रियाकर्म्मजन्यत्यर्थः । नन्वेवं नारदाय रोचते कलह

यनात् । नारदाय रोचते कलहः, वैश्याय शतं धारयतीत्यादौ तु नारदादेर्न सम्प्रदानता, किन्तु "रुच्यर्थानां प्रीयमाणः" (१।४।३३पा०) "धारेरुत्तमर्णः"(१।४।३५पा०) इति सूत्रद्वयेन सम्बन्धमात्रे चतुर्थी विधीयते, तत्र चतुर्थ्या सम्बन्धः, धातुना रुचिः, आख्यातेन विषयताऽभिधीयते, तथाच नारदस्य रुचिविषयः कलह इत्यादावस्य, पुनर्दानमङ्गीकृत्य द्रव्यग्रहणं धारणं, वैश्यस्य शतकर्म्मकतादृशग्रहणाश्रय इत्यन्तस्यान्वयधीः । सम्प्रदानस्य कारकत्वं धात्वर्थतावच्छेदकफलनिष्पादकतया ददस्वेत्यनुमतिप्रकाशेन कर्त्तुरिच्छामुत्पाद्य दाननिष्पादनेन वेति । अपरे तु त्यागजन्यस्वत्वजनकस्वीकारवत्त्वं सम्प्रदानत्वं श्राद्धादौ पित्रादेर्न

---

इत्यादौ नारदादेर्निरुक्तसम्प्रदानत्वाभावात् नमःस्वस्तीत्यादिसूत्राविषयत्वाच्च चतुर्थी न स्यादित्यत आह, नारदायेति ।—रुचिः,—प्रीतिः, सा चेच्छा, तथाच नारदसमवेतरुचिविषयकलह इत्यर्थः । वैश्यस्येति ।—वैश्यसम्बन्धिशतसंख्यकद्रव्यस्य पुनर्दानस्वीकारोत्तरग्रहणाश्रय इत्यर्थः । सम्प्रदाने क्रियानिमित्तत्वरूपकारकत्वं सङ्गमयति—सम्प्रदानस्येति । मतान्तरमाह, त्यागजन्येति ।—त्यागश्चात्र विधिना ग्राह्यस्तेन श्राद्धादौ नाति

स्वीकारः, रुद्राय गां ददातीत्यादावपि सम्प्रदानत्वं गौणमुद्देश्यत्वस्वरूपमित्याहुः ॥२६॥

---

व्याप्तिः। न स्वीकार इति।—अतो न पित्रादेः सम्प्रदानतेति शेषः, चतुर्थी तु नमःस्वस्तीत्यादिसूत्रादावित्यर्थः। ननु रुद्राये-त्यादौ रुद्रस्य तादृशस्वीकाराभावेन सम्प्रदानत्वाभावाच्चतुर्थी न स्यादित्यत आह—रुद्रायेति। मनसा पात्रोद्देशेन दानस्थले तादृशपात्रस्यापि सम्प्रदानतायाः सर्वसिद्धतया तस्य स्वीकारा-सम्भवेन तदनुपपत्तिरित्यस्वरस आहुरित्यनेन सूचितः।

"पुष्पमिदं विष्णवे नमः" इत्यादौ प्रीतिप्रकारकेच्छाधीनत्वं चतुर्थ्यर्थः, तस्य च मन्त्रकरणकत्यागविषयरूप-नमःपदार्थैकदेशे तादृशत्यागे तादृशत्यागरूपनमःपदार्थे वान्वयः। तादृशेच्छाया-मुद्देश्यत्वसम्बन्धेन विष्णोरन्वयः, नमःपदार्थतादृशत्याग-विषयस्याभेदसम्बन्धेन पुष्पादौ तादृशत्यागस्य वा विषयतासम्ब-न्धेन पुष्पादावन्वयः, निपातातिरिक्तनामार्थस्य भेदसम्बन्धेनान्व-यस्याव्युत्पन्नत्वात्; एवमग्रेऽपि। तथाच विष्णूद्देश्यकप्रीतिप्रकार-केच्छाधीनमन्त्रकरणकत्यागविषयाभिन्नं तादृशत्यागविषयो वा इदं पुष्पमित्यन्वयबोधः। ब्राह्मणोद्देश्यकगवादित्यागस्य मन्त्र-करणकत्वे प्रमाणाभावात् तत्प्रीत्युद्देश्यकब्राह्मणाय नम इत्या-दिको न प्रयोगः. ब्राह्मणेभ्यो नम इत्यादौ नमःपदार्थ-नति-विषयत्वं चतुर्थ्यर्थः, ब्राह्मणविषयिका नतिरित्यन्वयबोधः। पुष्पमिदं परमात्मने नम इत्यादौ परमात्मनः प्रीत्यसम्भवेऽपि तत्प्रीतिप्रकारकविसंवादिनीच्छासम्भवान्न तत्प्रीत्युद्देश्यकत्वा-प्रसिद्धिरिति स्वस्वकरणकहविस्त्यागविषयत्वं स्वधास्वाहयोरर्थः,

परकीयक्रियाजन्यविभागाश्रयत्वम् अपादानत्वम् वृक्षात् पर्णं पततीत्यादौ पतनाश्रयस्य पर्णादेरपादानत्ववारणाय परकीयेति, अत्र तु पञ्चम्या विभागजनकत्वम् अन्योन्याभावप्रतियोगितावच्छेद-

---

तेनेदं पित्रे स्वधा, अग्नये स्वाहा इत्यादौ पित्रुद्देश्यकस्वधाकरणकस्य हविस्त्यागस्य विषयाभिन्नमिदमित्याकारकस्तत्र बोधः, पैत्र्के त्यागे स्वाहादेः वैदिके च स्वधादेर्न करणत्वं तद्ग्राहकमानाभावादतः पित्रे स्वाहा अग्नये स्वधा इत्यादिको न प्रयोगः। अधिकमन्यत्रानुसन्धेयम् ॥२८॥

अपादानलक्षणं लक्षयति, परकीयेति।—स्वभिन्नसमवेतेत्यर्थः, स्वं लक्ष्यत्वेनाभिमतम्। पतनाश्रयस्येत्यनेन विभागजनकीभूतपतनक्रियायाः पर्णभिन्नासमवेतत्वं सूचितं, तेन च तादृशविशेषणेन पर्णस्यापादानत्ववारणमिति ज्ञापितम्। ननु परत्वे प्रकृत्यर्थतावच्छेदकावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन प्रकृत्यर्थस्यान्वयो वाच्यः, अन्यथोभयभेदमादाय पर्णात् पर्णं पततीत्यादिप्रयोगापत्तेः, तथाच पृथिव्याः पर्णं पततीत्यादिप्रयोगानुपपत्ति-(स)-रित्यतः परसमवेतत्वस्थले भेदप्रतियोगितावच्छेदकत्वमाह—अन्यान्येति। न च तथापि पर्णात् पर्णं पततीत्यादिप्रयोगापत्तिवारणं दुःशक्यं पर्णनिष्ठपतनक्रियायां पतनशून्यपर्णनिष्ठभेद-

---

(स) पर्णस्यापि पृथिवीत्वेन पृथिवीत्वावच्छिन्नप्रतियोगिताकभिन्नत्वाभावात् तथा-

कत्वञ्चाभिधीयते, विभागेऽन्योन्याभावे च वृक्षोऽधिकरणत्वेनान्वीयते, एवञ्च वृक्षवृत्तिविभागजनकवृक्षवृत्त्यन्योन्याभावप्रतियोगितावच्छेदकपतनाश्रयः पर्णमित्यन्वयधीः । अत्र च धात्वर्थतानवच्छेदकत्वेन विभागो विशेष्यः, तेन वृक्षं त्यजति खग इत्यादौ वृक्षादेर्नापादानत्वम् । यत्तु विभागावच्छिन्नक्रियायास्त्यजधात्वर्थतया विभागे विभागविशिष्टक्रियाजन्यत्वाभावान्न (ह) तत्र तथेति तदसत्,

प्रतियोगितावच्छेदकत्वसत्त्वादिति वाच्यं, यन्निष्ठविभागजनकत्वं पतनक्रियायां बोध्यते, तन्निष्ठभेदप्रतियोगितावच्छेदकत्वबोधस्यैव तादृशसमभिव्याहारस्थले स्वीकारादिति बोध्यम् । अधिकरणत्वेनेति ।—वृत्तित्वेनेत्यर्थः । अत्र—अपादानलक्षणे । धात्वर्थेति ।—तथाच परसमवेतधात्वर्थजन्यतद्धात्वर्थतानवच्छेदकवभागाश्रयत्वं तद्धात्वर्थापादानत्वमित्यर्थः । तादृशविशेषिणासहिष्णुमतमाह—यत्त्विति । जन्यत्वाभावादिति ।—तथाच तद्धात्वर्थतावच्छेदकावच्छिन्नजनकतानिरूपित-जन्यतावद्विभागाश्रयत्वमपादान-लक्षणघटकमिति भावः । तत्र—

न्वयानुपपत्त्या तादृशप्रयोगानुपपत्तिर्बोध्या । पर्णस्य समवायसम्बन्धेन पतनक्रियावत्त्वेन पृथिव्यां पतनवान्नेति भेदस्य सत्त्वेन पृथिवीनिष्ठभेदप्रतियोगितावच्छेदकत्वस्य पतने सत्त्वाद् भेदप्रतियोगितावच्छेदकत्वविवक्षणे तव नानुपपत्तिरित्यपि बोध्यम् ।

(ह) जनकतासम्बन्धेन विभागविशिष्ट[illegible]

तथा सत्यधःसंयोगावच्छिन्नक्रियाया एव पतधात्वर्थतया वृक्षपर्णविभागे पतनादेरधःसंयोगावच्छिन्नक्रियात्वेनाजनकत्वादसम्भवापत्तेः, तदुपलक्षितजन्यत्वञ्च उभयत्र समानमिति । (क) एवञ्च ग्रामाद् गच्छतीत्यादौ गमनादिजन्यविभागाश्रयत्वेन ग्रामादेरपादानत्वम् । "ध्रुवमपायेऽपादानम्" ( १।४।२४ पा० ) इति पाणिनिसूत्रम्, अपाये—विभागे, ध्रुवं—निश्चलं, तद्विभागजनक-

---

वृक्षं त्यजतीत्यादौ वृक्षे, तथा—अपादानत्वम् । तथा सतीति ।—तद्धात्वर्थतावच्छेदकावच्छिन्नजनकतानिरूपितजन्यत्वस्य विवक्षणे सतीत्यर्थः । तादृशफलोपलक्षितक्रियाजन्यत्वस्य विवक्षितत्वे तद्दोषतादवस्थ्यमाह, तदुपलक्षितेति ।—फलोपलक्षितेत्यर्थः । एवञ्चेति ।—विभागे धात्वर्थतानवच्छेदकत्वविशेषणे एव चेत्यर्थः । ग्रामादेरपादानत्वमिति ।—अन्यथा विभागे संयोगविशिष्टक्रियाजन्यत्वाभावात् ग्रामादेरपादानत्वं न स्यादिति भावः । (ख) सूक्तं

---

जनकतावच्छेदकमिति गुरुधर्मावच्छिन्नजनकताया अन्यथासिद्धत्वात् विभागे तादृशक्रियाजन्यत्वाभाव इति भावः ।

(क) तदुपलक्षितजन्यत्वं—फलोपलक्षितक्रियाजन्यत्वं, फलञ्च विभागाधःसंयोगादिकम् । उभयत्र समानमिति ।—तथाहि यथा वृक्षपर्णविभागेऽधःसंयोगोपलक्षितक्रियाजन्यत्वं तथा वृक्षं त्यजतीत्यादौ विभागे विभागोपलक्षितक्रियाजन्यत्वस्य न किञ्चिद्बाधकम्, उपलक्षितविशेषणे जनकतावच्छेदकत्वाभावेन गौरवाभावादिति भावः ।

(ख) तथाहि विभागे धात्वर्थतानवच्छेदकत्वविशेषणे दत्ते च लक्षणे विभागी

क्रियाशून्यमिति तदर्थः।(ग) धावतोऽश्वात् पतित इत्यादौ पञ्चमी नैतत्सूत्रेणानुशिष्टा, तदर्थं वक्तव्यान्तरं विधेयम्। वस्तुतस्तु विभागजनकत्वं

---

व्याख्याय स्वमताविरोधमुपपादयति, अपाये इति।—क्रियाशून्यमित्यर्थः, इति फलतो न विशेषः।(घ) नन्वेवं धावतोऽश्वादश्ववारः पतित इत्यादौ अश्वादेरपादानत्वं न स्यात्, तत्र विभागजनकधावनक्रियावत्त्वा-(ङ)-दित्यतस्तत्रेष्टापत्तिमाह—धावत इति। अनुशिष्टा—अभिहिता। नन्वपादानत्वविरहे कथं पञ्चमीत्यत आह, तदर्थमिति।—तत्र पञ्चमीप्राप्त्यर्थमित्यर्थः, विधेयं—सूत्रान्तरं कल्पनीयमित्यर्थः, मुनेः सूत्राभावादिति भावः। कल्पनासहिष्णुराह—वस्तुतस्त्विति।

---

धात्वर्थतावच्छेदकावच्छिन्नजनकतानिरूपितजन्यत्वनिवेशस्यानावश्यकत्वेन विभागे संयोगविशिष्टक्रियारूपगमनजन्यत्वमक्षतमेव, अन्यथा क्रियात्वापेक्षया संयोगविशिष्टक्रियात्वस्य गौरवेण जनकतानवच्छेदकतया तदवच्छिन्नजनकतानिरूपितजन्यत्वस्य विभागेऽसम्भवात् ग्रामादेरपादानत्वं न स्यादिति भावः।

(ग) क्रियात्वापेक्षयाऽधःसंयोगावच्छिन्नक्रियात्वस्य गौरवेण विभागजनकतानवच्छेदकत्वात् तदवच्छिन्नजनकतानिरूपितजन्यत्वस्य विभागेऽसम्भवादिति भावः। अत्र रौद्री,—"सूत्रमप्येतत्परतयैव व्याचष्टे ध्रुवमिति, विभाग इति सप्तम्यर्थो जनकत्वं, तच्च ध्रुवपदार्थैकदेशक्रियान्वयि। क्रियाशून्यमिति—क्रियाया अव्याप्यवृत्तित्वोपगमे तु "ध्रुवं" क्रियावद्भिन्नमिति व्याख्येयं, तथाच निरुक्तभेदप्रतियोगितावच्छेदकक्रियाजन्यविभागवत्त्वं लब्धम्" इति।

(घ) निरुक्त-पाणिनिसूत्रार्थस्यास्मत्कृतापादानलक्षणार्थस्य च फलतो वैषम्यं नास्त्येव इति भावः।

(ङ) तत्र—अश्वे, विभागजनकधावनक्रियावत्त्वात्—तादृशक्रियाशून्यत्वविरहात्, तादृशक्रियाशून्यत्वेनापादानत्वेन ... इति भावः।

यत्क्रियायामन्वीयते तत्क्रियाशून्यत्वमर्थः, तेन धावतोऽश्वात् पतित इत्यादौ न काप्यनुपपत्तिः, अत्र पतनक्रियायामेव पञ्चम्यर्थविभागजनकत्वान्वयेनाश्ववृत्तिधावनक्रियायां तदनन्वयादिति ।

---

तत्क्रियाशून्यत्वमिति ।—क्रिया—धात्वर्थः, स्वनिष्ठविभागजनकीभूतयत्किञ्चित्क्रियाशून्यत्वं स्वनिष्ठविभागजनकीभूतक्रियावत्त्वमिति यावत्, तादृशक्रियावत्त्वञ्च स्वनिष्ठावच्छेदकताकभेदवत्त्वसम्बन्धेन बोध्यम् । तदनन्वयात्—पञ्चम्यर्थविभागजनकत्वानन्वयादित्यर्थः, तादृशसम्बन्धेन धावनक्रियावत्त्वाभावेऽपि पतनक्रियावत्त्वादिति भावः ।

ननु धावतोऽश्वात् चैत्रः पततीत्यादौ चैत्रस्यापि स्वनिष्ठविभागजनकीभूतधावनक्रियाशून्यत्वात् (च) तस्याप्यपादानत्वापत्तिः, न च स्वनिष्ठविभागजनकत्वान्वितक्रियाशून्यत्वमित्येव विवक्षणीयं, तथा च चैत्रनिष्ठो यो विभागस्तज्जनकत्वस्य पतनक्रियायामेवान्वयात्तत्शून्यत्वाभावान्न चैत्रस्यापादानत्वमिति वाच्यं, धावतोऽश्वात् पतिताच्चैत्रादुष्णीषः पततीत्यादौ चैत्रस्यापादानत्वानुपपत्तेः चैत्रनिष्ठो यो वस्तुगत्या विभागस्तज्जनकत्वान्विताश्वावधिकपतनक्रियावत्त्वात्, न च स्वनिष्ठत्वेन विभागजनकत्वान्वितक्रियाशून्यत्वं विवक्षणीयं, तथाच वस्तुगत्या यश्चैत्र-

---

(च) धावनक्रियायां कदाचिद् विभागजनकत्वसम्भवेनाह,—विभागजनकीभूतधावनेति ।

अपाये विभागे ध्रुवमवधीभूतमपादानमित्यर्थः, अवधित्वं स्वरूपसम्बन्धविशेषः प्रतीतिबलात् कल्प्यते, तेन धावतोऽश्वात् पतित इत्यादौ

---

निष्ठो विभागस्तज्जनकत्वान्वयस्य चैत्रनिष्ठपतनक्रियायां सत्त्वेऽपि चैत्रनिष्ठत्वेन विभागजनकत्वान्वयस्य चैत्रनिष्ठपतनक्रियाया-मभावात्, किन्तूष्णीषपतनक्रियायामेव तच्छून्यत्वं चैत्रे-ऽच्चतमिति न तत्र चैत्रस्यापादानत्वहानिरिति वाच्यं, तथा सति तादृशक्रियाशून्यत्वमादाय धावतोऽश्वात् पतति चैत्र इत्यादौ चैत्रस्यापादानत्वापत्तिरिति चेवं, तत्क्रियाजन्य-विभागाश्रयत्वे सति स्वनिष्ठत्वेन विभागजनकत्वान्वितत्क्रिया-शून्यत्वं तत्क्रियापादानत्वमिति पतनव्यक्तिभेदेनापादानलक्षणस्य भिन्नत्वात्, एतल्लाभायैव विभागजनकत्वान्वयिक्रियाशून्यत्व-मनभिधाय विभागजनकत्वं यत्क्रियायामन्वीयते, तत्क्रियाशून्यत्व-मित्यभिहितं, सत्यन्तनिवेशात् धावतोऽश्वात् पतति चैत्र इत्यादौ धावनक्रियाप्रयोज्यचैत्रनिष्ठपतनक्रियाशून्यवृच्चादौ न तत्क्रियापा-दानत्वापत्तिः, एवञ्च धावतोऽश्वात् पतिताच्चैत्रादुष्णीषः पततो-त्यादौ उष्णीषादिनिष्ठपतनक्रियापादानत्वं चैत्रे इष्टमेव, क्रियाया अव्याप्यवृत्तित्वे क्रियाशून्यत्वस्थाने क्रियावच्छेद एव निवेश्य इत्यलमतिविस्तरेण।

मतान्तरमाह—अपाये इति। अपादानमित्यर्थ इति।—सूत्रस्येति शेषः। ननु निष्क्रियस्यैवापादानत्वात् तत्रैवावधित्वं स्वीकार्य्यं, तथा च सक्रियस्याश्वादेरवधित्वं न स्यादत आह—स्वरूपेति। प्रतीतिबलात्—धावतोऽश्वाद्विभजते इत्यादिभो-

सक्रियस्याप्यश्वादेरपादानत्वं नानुपपन्नम्, अत एव वृक्षपर्णयोः क्रियया पर्णस्य विभागेऽपि वृक्षस्यावधित्वोपपत्तिरिति कश्चित् ।

वृक्षात् विभजते पर्णमित्यादौ विभागावधित्वमपादानत्वम्, अवधित्वम् अवधिमत्त्वं वा स्वरूपसम्बन्धरूपं पञ्चम्यर्थः, इत्थञ्च वृक्षावधिकविभागाश्रयः पर्णमित्यन्वयबोधः । न चैवं स्वस्माद्विभजते इत्यपि स्यादिति वाच्यं, स्वप्रतियोगिकत्वविशिष्टसंयोगस्येव स्वावधिकत्वविशिष्टविभागाश्रयत्वस्य

---

बलात् । अत एवेति ।—धीबलात् सक्रियस्यापादानत्वादेवेत्यर्थः । अत्र च वृक्षावधिकविभागसत्त्वेऽपि "न वृक्षाद्विभजते" इति प्रयोगापत्तिः, निरूपकत्वस्य वृत्त्यनियामकतयाऽभावप्रतियोगितानवच्छेदकत्वेनान्यसम्बन्धेनाभावस्य विभागे सत्त्वादित्यस्वरसः कश्चिदित्यनेन सूचितः ।

निष्कृष्टमतमाह—वृक्षादिति । विभागावधित्वमपादानत्वं पञ्चम्यर्थोऽपि तदेवेति भावः । अवधित्वमिति ।--तस्य निरूपकत्वसम्बन्धेन विभागादावन्वयः । निरुक्तास्वरसादाह, अवधिमत्त्वमिति ।—अवधितानिरूपकत्वमित्यर्थः, तदेकदेशेऽवधित्वे वृक्षस्याधेयतया, तस्य च स्वरूपसम्बन्धेन विभागेऽन्वयः । ननूभयनिष्ठविभागस्यावधित्वमुभयत्रैवेति, स्वस्माद् विभजते इत्यपि स्यादित्याशङ्क्य निषेधयति—न चेति । एवम्—अवधित्वादेः पञ्च-

